है। धर्म को जो मारता है धर्म उसे अवश्य मारता है। अतः नवीनशास्त्र के निर्माण एवं प्रयोग द्वारा प्रगति एवं विकास के नाम पर हिन्दूसमाज को ऋण एवं दरिद्रता के अतिरिक्त मिला क्या? वेदीन, बेइमान, लोभी एवं कामी ही परस्वत्वापहार कर सकता है। परस्वत्वापहरण वैध हो या अवैध सब अनार्यजुष्ट है। अस्पृश्यस्पर्श, अभक्ष्यभक्षण, अगम्यागमन, हिंसा, क्रूरता, हत्या, लूट, अपहरण, बलात्कारादि के मूल में धर्म नहीं अधर्म है, अर्थ नहीं अनर्थ है, स्वराज्य नहीं कुराज्य है। 'स्वराज्य' का स्वरूप तो—

**'न मे स्तेनो जनपदे न कदर्यो न मद्यपः।**
**नानाहिताग्नि र्नाविद्वान् न स्वैरी स्वैरिणी कुतः'।।**

इस वेद में है। लोक में ऐसे शासन की स्थापना 'वेद' पुराण एवं धर्मशास्त्रप्रतिपादित आर्थिक राजनीतिक प्रयत्नों से ही सम्भव है न कि नवीन शास्त्रनिर्माण से। 'नवीनशास्त्र बनाम प्राचीन शास्त्र' का विवाद रायल एशियाटिक सोसाइटी, की देन है जिसने सनातन आचार्यपरम्परा से ब्राह्मणादि चाण्डालान्त जनता को काटने के लिए सत्ता के माध्यम से भारत के इतिहास, भूगोल, समाज संस्कृति, धर्म, अर्थ, काम, परम्परा की अनाद्यविच्छिन्न धारा को रोका तथा भारत का विभाजन कराया, निश्चित रूप से वे पतित ही कहे जाएँगे।

तात्कालिक लाभ के लोभ से आक्रान्त अभक्ष्यभक्षी अपेयपायी अगम्यागामी, व्याघ्रचर्मावच्छिन्न शृगालायमाण विद्वानों को उनके स्वरूप में स्थापित करने तथा लोकप्रसाद के मूलाधार श्रुतिस्मृतिपुराण तन्मूलक धार्मिक एवं आर्थिक विकास हेतु आचार्यपरम्पराप्राप्त सन्मार्ग को आलोकित करने के लिए भारतीय आर्यमर्यादा विज्ञानसमिति की स्थापना की गयी है। आचार्य कौटिल्य द्वारा स्थापित 'आर्यमर्यादापीठ' के पुनरुद्धार की अनुज्ञा सन् १९७७ में मुझे धर्मसम्राट् स्वामी श्री करपात्री जी महाराज ने दी थी। 'आर्यमर्यादापीठ' ने मौर्यसाम्राज्य के माध्यम से राष्ट्र की धर्मसापेक्ष पक्षपातविहीन सांस्कृतिक राष्ट्रवादी चेतना को व्यवस्थापित किया। गुप्त साम्राज्य की स्थापना में, कण्व, शातवाहन विक्रमादित्य, हर्षवर्धन आदि भी उसी क्रम में रहे। विजयनगरसाम्राज्य की स्थापना विद्यारण्यस्वामी ने की, समर्थगुरुरामदास ने शिवाजी के माध्यम से आर्यमर्यादा की रक्षा की। 'रामादिवत्, न रावणादिवत्' आर्यमर्यादा का सूत्र है जो 'यतेमहि स्वराज्ये' के माध्यम से लोकप्रसादन में आस्था रखता है। लोकावसादन ही अनार्य चेष्टा है। तादृश शास्त्रविरुद्ध चेष्टाओं को पतन मानते हुए पतितों से संसर्ग के कुपरिणामों से भावी युवावर्ग को सचेत करने के लिए इस पीठ के द्वितीय, अद्वितीय आचार्य डॉ.

अद्वितीय आचार्य डॉ. कमलाकान्त त्रिपाठी की उभय भारती में प्रवर्त्तित 'पातित्यपेटिका' तमस्तोमविदारण में पाशुपतास्त्र का कार्य करेगी। धर्म की व्याख्या के व्याज से शास्त्रमर्यादा की खिल्ली उड़ाने वालों के 'मुखपिधान' हेतु पातित्यपेटिका सफल हो इस मंगलाशंसा के साथ, अशेष अदूष्य वैदुष्य एवं स्नेहभाजन आचार्य कमलाकान्त त्रिपाठी को इस अद्वितीय ग्रन्थनिर्माण के माध्यम से पीठ के उद्देश्य के अग्रसारण हेतु धन्यवाद।

डॉ॰ गिरीश दत्त पाण्डेय

**(डॉ. गिरीश दत्त पाण्डेय)**
संरक्षक
भारतीयआर्यमर्यादाविज्ञानसमिति
अधर्मनिरपेक्षधाम,
गंगापुर बाजार, वाराणसी

# पातित्यपेटिका

## मङ्गलाचरणम्

अखण्डं सहजञ्चैव सच्चिदाकारविग्रहम्।
सर्वशेषितया भान्तं तमानन्दमुपास्महे।।१।।

प्रजापतिसमारम्भां शबरस्वामिमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।२।।

यद्विशुद्धसदाचारात् कुमार्गा बुद्धगामिनाम्।
प्रलीयन्ते नमस्तस्मै भट्टपादाय सूरये।।३।।

श्रीभूमानन्दतीर्थामलचरणरजःप्राप्तसिद्धिप्रकर्षाः
प्रत्यक्चैतन्यदृष्टिक्रकचविलुलिताशेषमायोपबन्धाः।
मर्यादायामपूर्णामखिलभुवमहो कर्तुमेव प्ररुढाः
श्रीमन्तः कल्पवृक्षा इव कलितगुणास्तेऽच्युतानन्दतीर्थाः।।४।।

विध्युद्देशैरदोषैः प्रकटितपरमापूर्वभाजां क्रियाणां
तत्तत्तीर्थेष्वकुण्ठेष्ववहितमनसा सम्प्रयोगानुवृत्त्या।
जाता लोकोत्तरा ये जगति गतिमतां प्राणिनां भव्यतायै
भ्राजन्ते तेऽपि वर्याः सहृदयहृदये विश्वनाथावधूताः।।५।।

निजसकलविधाभि र्भावयन्नागमान् नः
पशुपतिरिव लोके दिव्यदृष्टिं दधानः।
अतिशयिततपःश्रीव्यक्तसच्चिन्मुदात्मा
जयति भुवि भवानीनन्दनाख्यो यतिः सः।।६।।

श्रीविष्णोः पादपद्मप्रणयलयगुणप्रोतपुष्टप्रपत्ति-
त्रस्तारातीतिवर्गो निरयपथजुषोऽशिष्टदुष्टानरिष्टान्।
औदासीन्यञ्च धर्माद् भजत इह खलानस्यनाशु प्रपन्ना-
चार्यो रामानुजार्यो मनसि सुमनसां कौशलेन्द्रश्चकास्ति।।७।।

एतेषामप्यहो ये प्रथितगुणगणोत्कर्षभाजां विराजां
प्रत्यक्तत्त्वाहितश्रीनिरूपमविमले मानसे संगता ये।
सद्विद्याभासकत्वात् त्रिभुवनविषये भाति येषाञ्च नूत्ना।
श्रीविद्याभास्कराख्याऽधरितसुकवयो ये च काव्यक्रियासु।।८।।

तेऽनन्तश्रीविभूषाविलसितचरणद्वन्द्वपद्मत्रिदण्डि-
स्वामिस्वच्छप्रसादावलिललिततनुद्योतिताशावकाशाः।
दीव्यद्दैवानिवास्मान् सफलयितुमहो भूमिभागावभासा
आचार्या वासुदेवा दयितहरिपदाम्भोरुहा उल्लसन्ति।।९।।

(युग्मकम्)

एतद्वन्द्यकृपासिन्धुविन्दुलब्धमनोरथा।
समायाता विभातीयं लोके पातित्यपेटिका।।१०।।

अतः परं तपोभि र्वै भारतर्द्धिविधायिनाम्।
विदधामि स्तुतीः शुभ्रा गुरुणामपि साम्प्रतम्।।११।।

विद्यावदाततनुमद्भुतयोगशक्ति-
प्रादुर्भवत्सकलसिद्धिसमर्चिताङ्घ्रिम्।
धर्मोन्मुखं सकललोकमिमं विधातुं
लब्धावतारकरपात्रमहं नमामि।।१२।।

ये भूयसीं विभवसन्ततिमप्यवाप्य
निर्द्वन्द्वमाशु विजहु र्मलवत् पुनस्ताम्।
इत्थं यतीन्द्रपदमात्मनि यै र्निबद्धं
तेभ्यो नमोऽस्तु करपात्रपदाम्बुजेभ्यः।।१३।।

श्रीमद्गुरोश्चरणपङ्कजरेणुलब्ध-
सर्वागमस्फुरितशुद्धपदार्थजाताः।
राजत्स्वकीयसमुदारमहानुभावैः
काश्यां जयन्तु सततं कविराजपादाः।।१४।।

गुर्जरे नडियादाख्ये स्थाने ज्योतिर्विधायिनी।
भ्राजते साधुसम्पच्छ्रीसन्तरामपरम्परा।।१५।।

राष्ट्रर्द्धिसिद्धौ विहितप्रयासाः श्रीसन्तरामोन्नतचारुहासाः।
विद्वन्मनस्तोषभृतार्यभाषास्ते रामदासा इव रामदासाः।।१६।।

य इह खलु दयाढ्यस्वान्ततः सुप्रयुक्ता
अतिगहनगभीरग्रन्थचिन्तासु सक्ताः।
विपुलहृदयभाजोऽस्मासु चासन् ततश्री-
गुरुशशिधरमिश्रान् सादरं तान् नमामि।।१७।।

साहित्यशास्त्रविमलार्णवपारगा ये
नूनं तथैव पदशास्त्रविदो जगत्याम्।
अध्यापनैकरसिकान् रसिकालिजुष्टान्
तान् वायुनन्दनगुरुन् शिरसा नमामि।।१८।।

न्यायशास्त्रेषु निष्णाताश्छात्रानध्याप्य निर्वृताः।
पूज्यपादा जयन्त्यत्र श्रीवशिष्ठत्रिपाठिनः।।
न्यायादिसर्ववेदान्तविद्याप्राप्तमनोरथान्।
गुरुवर्यानहं वन्दे वैद्यनाथमहोदयान्।।२०।।

पुत्रानिव वटून् सर्वान् पालयामास सादरम्।
यः सदा तमहं वन्दे राजवंशिद्विवेदिनम्।।२१।।

बाल्ये योऽध्यापयामास कौमुदीं मामतन्द्रितः।
शिवगोविन्दशर्माणन्तं नमामि पितामहम्।।२२।।

विद्योतते स्म मतिमानिव जैमिनि र्यः
शास्त्रेष्कुण्ठगतिरत्र च वार्धकेऽपि।
अध्यापयद् विधृतकौतुकमेव तं वै
पट्टाभिरामगुरुवर्यमहं नमामि।।२३।।

स्वसर्वस्वबलेनैव ब्रह्मोद्यमविधायिनः।
श्रीडाह्माभाइपञ्चोलीपादाः सन्तु हृदीह नः।।२४।।

स्वसम्प्रदायोन्नतभूमिकायां कृतप्रयत्नाश्च यतीन्द्रवर्याः।
जयन्त्यमीषां जगतां गुरुश्रीरामेश्वरानन्दपदप्रवालाः।।२५।।

अखण्डानन्दपादश्रीसमुपासननिर्वृताः।
ओङ्कारानन्दपद्पद्ममहान्तो भान्तु मे हृदि।।२६।।

एतैरुदात्तपुरुषै र्मयि यत् कृतं तत्
सर्वं निधाय हृदये च विचार्य तत्त्वम्।
लोके समागतवती किल पेटिकेयं
भूयान् मुदे सुमनसां शुभदक्षिणेव।।२७।।

●

# अथ प्रथमं वर्णाश्रमधर्मव्यवस्थापनाधिकरणम्

निःश्रेयसाधिगमनाय यथोपदेशं धर्मानुष्ठानतत्परा आस्तिक-महानुभावा विभावितान्तरा लोकोत्तरविभाभूषिता अनारतं विलोक्यन्ते भारतभूमावेव। यद्यपि देशान्तरेऽपि धर्मपदं चकास्ति तथापि निर्मूलत्वात् देशान्तरजनता धर्ममेवानुतिष्ठतीति न वक्तुं शक्यते। भवन्ति तत्रापि धार्मिकबुद्ध्याऽनुष्ठीयमानाः केचनाचारास्तथापि तान् धर्मत्वेन न स्वीकुर्वन्ति धर्मतत्त्वविदः। यस्तु शास्त्रमूलो वास्तविको धर्मः सदातनः स इदानीं कैश्चन चक्षुर्निपतितसिकतेव विभाव्यते। निजस्वार्थपोषणमात्रपराणां श्रेयःसाधनरूपेषु वेदोदितेषु धर्मेषु भूयान् विद्वेष एव दरीदृश्यते। तेषामेव दुर्भगाणां कुत्सितदृष्टौ धर्मः सामाजिकसौहार्दशङ्कुभूतस्तिष्ठति। यो हि धर्म एव न भवति स गुणायमानो हृदयपुण्डरीकमध्यास्ते। विलोक्यैव साम्प्रतिकीं लोकस्थितिं प्रस्तूयते विचारोऽयम्—

किं वेदैकसमधिगम्येन वर्णाश्रमोचितेन धर्मेण लोकसमुन्नतिविघात आहोस्वित् सुखसमृद्धिविलासः? तदर्थञ्च किं धर्ममूलस्य वेदस्य समूलोन्मूलनाय तथा तादृशधर्मप्रतिष्ठापकवर्णविभागविध्वसंनाय प्रयासो विधेयः, अथवा तत्संरक्षणाय जीवनसमर्पणमपि कार्यमिति? कथमेवंविधसन्देहावसर इत्यपेक्षायामुच्यते—

उभयविधप्रवृत्तिदर्शनेन तादृक्सन्देहस्य पुरःस्फूर्तिकत्वम्। दृश्यन्ते हि केचन वेदविदूषिकास्तद्बोधितयावत्पदार्थजातसहजपरिपन्थिनो मल-कुल्योपकण्ठनिवसतिवर्त्मसु चरन्तः कोला इव भारतक्रोडवर्तमानान्न-जलपवनपरिपुष्टाः। केचन स्वभावसुमधुरवृत्तयः समासादितभगवद्व्रतयः समुपासितसद्गुरुततयः शोभनभव्यमतयः सुन्दरीचकासत्कुचयुगलप्रतिष्ठा-प्राप्तोरःस्थलविराजमानमौक्तिकमालेव वसुन्धरावक्षसि महार्घभूषणायमानाः प्रायः समुलभ्यन्ते। अन्योन्यविरुद्धमार्गावलम्बिनां स्वमतपरिपोषणाय तथा परमतनिरासाय प्रयासबाहुल्यमपि भारते विलोक्यते। अतस्तात्त्विक-दृष्टिसम्पत्तये विचार आवश्यकः। तत्रायं पूर्व पक्षः—

दलितत्रासमूलत्वात् प्रायो विद्वेषकारणात्।
भेददृष्टिप्रधानत्वाल्लोकोच्छेदप्रसङ्गतः।।१।।

राष्ट्रैक्याखण्डताभङ्गात् तत्समृद्धिप्रबाधनात्।
वेदवर्णाश्रमाचारध्वंस एव विधीयताम्।।२।।

वेदोदितेन वर्त्मना वर्णविभागमनङ्गीकृत्य पदात् पदमपि न गन्तुं शक्यते। जाग्रति वर्णविभागे सम्भ्रान्तपदभाजामुन्नतवर्णोत्पन्नानां विलक्षणैव मनोदशा भवति। स्वकीयोत्कर्षमात्ररसिकत्वाद् धि ते दलितवर्गे न शुभां दृष्टिं वितन्वते। दलितवर्गोत्कर्षविघातप्रयासो बहुलतया तेषां भवति। एवं भूयसो मनुष्यवर्गस्य दलितस्य त्रासः सहज इवैवावतिष्ठते। तत्र च मूलं वर्णाश्रमधर्मव्यवस्थैव। तस्याश्च मूलं वेद एव कौरवाणामिव धृतराष्ट्रः। सवर्णानां दलितजनतां प्रति भूयानत्याचारो वर्णाश्रमधर्मव्यवस्थाया एव प्रसादः। कथयत्येवाम्बेडकरः—

'वैदिकधर्मावलम्बिनो मन्दिरप्रवेशाय अस्पृश्यान् नानुमन्यन्ते। अस्पृश्यानां मन्दिरनिर्माणे तथा तत्र भगवन्मूर्तिस्थापने नास्त्यधिकार इति वैदिका ब्रुवते। आगरानगरे कोऽपि चर्मकारः कञ्चिद् ब्राह्मणं स्वीयनिकेतने भगवन्तं नारायणं पूजयन्तं विलोक्य स्वगेहेऽप्यसौ तथाऽकरोत्। विदितसकलतद्वृत्तान्तो ब्राह्मणः प्रभूतक्रोधदहन्मूर्तिः ग्राम्यान् गृहीत्वा तं चर्मकारमुपेत्य पशुमारममारयत्। आह च कथन्नु ते विष्णुपूजायां साहससम्पत्तिरिति। पश्चात् तदीयमुखं कर्दमेन पूर्णं विधाय तमत्यजत्। हताशः किल वराकश्चर्मकारः वैदिकमार्गं परित्यज्य मोहम्मदप्रसारितमार्गमग्रहीत्। एवं दलितत्रासमूलत्वात् सनातनाख्येन धर्मेण लोकसमुन्नतिविघात एवायाति। ततश्च तत्समुन्मूलनाय प्रयासः शासकवर्गस्य कार्यताकोटिमधिरोहति। निजसमुन्नतिमुद्दिश्य स्पर्धा प्राणिमात्रस्य स्वभावः। कोऽपि सचेता मानवः कमप्यपीडयन् केनापि पथा निजसमुन्नतिं यदि वाञ्छति तदाऽसौ किमनिष्टं लोकस्य विदधाति। यदि ब्राह्मणोऽग्निहोत्राद्यनुष्ठानेन भगवदाराधनेन वा किमपि लोकोत्तरं सुखमभिलषति तदा तत्सुखलिप्सया यदि कश्चिच्छूद्रो ब्राह्मणवदेवाचरति तदासौ वराकः कथमिव कदर्थनीयो भवेत्। समानाकृतयः समानशयनादिवृत्तयो मनुष्या यदि सन्ति तदा तदाचारं प्रति भिन्नैव

प्रणाली धर्मनिरपेक्षशक्तीनां चेतो विधूनयत्येव। अहो नूनं लोकविद्वेषकारी वेदोऽस्ति। सकलानर्थमूला हीयं जातिपरम्परा नर्ते वेदात् सत्तामुपेता। जातिविशेषमेवाधिकृत्य वेदः प्रवर्तते। वेदाय वेदोदितधर्मानुष्ठानाय च प्रजातन्त्र उत्कोचमिव जातिं पुष्णन्ति मर्त्या विशेषतस्त्रैवर्णिकाः। वर्णसाङ्कर्यात् तु चाण्डालस्पर्शादिव बिभ्यति ते। सङ्कुचितवृत्तिप्रायान् पशूनिव जीवनपद्धतिं बिभ्रतो हीनान् मनुष्यान् नूनं परिहरन्ति गणयन्ति चाशुभमिव। एकस्यामेव मानवजाताविायान् भेदभूधरः परस्परं विद्वेषविवर्धनाय हविर्भुजि संस्कृताज्याहुतिरिव ज्वालासमुज्जृम्भणाय प्रभुः। एवं सति वर्णाश्रमधर्मे तन्मूले वेदे चात्यन्तं क्षयमुपगत एव समतामूलकसमाजसंरचना भाविनी, अन्यथा यावत्प्रलयं परस्परविद्वेषदावानलः कथमिव निवारणीयो भवेत्। अनुभवन्ति बुद्धिजीविनो धर्मनिरपेक्षतावादिनो महात्मानो लोकस्यैव विनाशम्। कुतः? वेदस्य भेददृष्टिप्रधानत्वात्। अहो खलु वेदोऽयं सर्वतोभावेन ब्राह्मणमेव योग्यताशक्तिसचिवं मनुते। यतो हि स तमेव याजनाध्यापनप्रतिग्रहेषु नियुञ्जानो विलोक्यते।

यद्यपि स्वाध्यायाध्ययनक्रमेण क्षत्रियवैश्यावपि स्वविहिताग्निहोत्रादिधर्मेषु नियुङ्क्ते तथापि स महानुभावो वेदो याजनादिकर्मसु तावनर्हौ मनुते। ज्योतिष्टोममेव प्रथमं तावद् विलोकयतु भवान्। देवानां ब्राह्मणानां च कृते सोमरसपानव्यवस्था भवति, क्षत्रियस्तु वराकस्तत्र दीक्षितोऽपि न्यग्रोधस्तभिनीरसं पिबति। नासावधिकारी सोमरसस्य। क्षत्रियवैश्यावपि विद्यावन्तौ। निद्यैवाध्यापने याजने च निमित्तं तथापि तौ वेदेन स्वाधिकाराद् बहिष्कृतौ। परस्परसाहाय्याचरणेन यद्यपि त्रैवर्णिकाः संहता भवन्ति तथापि शूद्राणामन्त्यजानाञ्च दुर्व्यवस्थां कोप्युदारचेता द्रष्टुमपि न पारयति। ते हि वराकाः पशुभ्योऽपि हीना गण्यन्ते। तेषां समीपे स्थातुं शयितुं पातुं भोक्तुमपि नोत्सहन्ते। तदीयजलाशयजलापहरणे दण्डभाजो भवन्ति। अत एव ते समतामूलकं शाक्यमार्गं वा मोहम्मदमार्गं वा ईसामार्गं वा परिगृह्णन्ति त्यजन्ति च वैदिकमार्गं लोकक्षयकारकम्। कर्मानुसारिण्येव वर्णव्यवस्था। यदि शूद्रोऽपि ब्राह्मणवदेव संस्कारमुपेत्य स्वाध्यायमधीते अनुतिष्ठति च धर्मं तदा स ब्राह्मणतया स्वीकरणीय एव।

ब्राह्मणोऽपि यदि हीनं कर्म करोति तदा शूद्र एव। वस्तुतस्तु अप्रत्यक्षत्वात् नास्ति वर्णप्रविभागः। ततश्च वेदो हेय एवेति नाश एव तस्य तन्मूलभूतानामन्येषामपि ग्रन्थानां विधेय एव। राष्ट्रियैकताऽखण्डता या प्रजातन्त्रस्य प्राणभूतैव तिष्ठति। कथमिव वराकी जाग्रति वेदे वर्णवर्गे च स्थिरतामुपेयात्? सर्वथा भङ्ग एव तस्या भविष्यति। ततश्च राष्ट्रियसमृद्धिबाधोऽपि स्यात्। एकतामूलैव समृद्धिरिति नयतत्त्वविदो वदन्ति। एकता च वेदेनैव विभज्यत इति नूनं वसुन्धरायां वेदो गरलानोकह एव। अतस्तस्य तदुदितवर्णाश्रमाचाराणाञ्च ध्वंस एव विधीयतामिति प्राप्ते—

**ब्रूमः**

स्यादेवं सकलो दोषो वेदश्चेद् दोषयुग् भवेत्।
मात्सर्यग्राहगुप्तेषु ग्रन्थेष्वेवं स्थितिर्भवेत्।।१।।

वेदो ह्यपौरुषेयो नः सर्वथा दोषवर्जितः।
किञ्च तेनैव सम्भाव्या धर्माधर्मव्यवस्थितिः।।२।।

शाक्यादिदुष्टबुद्धीनां धर्मादिमूलता कथम्?
क्षुद्रस्वार्थयुतत्वात् ते ह्यव्यवस्थाविधायिनः।।३।।

ये च साधारणा धर्मा यथा सत्यादयः शुभाः।
तत्र तु भगवान् वेदो मानवान् सकलानपि।।४।।

नियुञ्जानो भवत्येव श्रेयःसम्पत्तये सदा।
यो हि धर्मो विशेषोऽस्ति तत्तद्वर्णाय चोदितः।।५।।

कथमन्यो नियोज्यः स्याद् नरकावाप्तये पुनः?
धर्मक्रियाप्रयोगेषु विध्याख्यः शब्द एव वा।।६।।

त्रैवर्णिकान् सुमनसः शिष्टानधिकरोति चेत्।
किं कुर्युस्तत्र धर्माणां व्याख्यातारो महर्षयः।।७।।

ब्राह्मणत्वादिजातेश्च प्रत्यक्षत्वन्तु वार्तिके।
प्रसाधितं प्रयत्नेन साङ्कर्यं तत्र नेष्यते।।८।।

यदि वा वर्णसाङ्कर्यं व्यभिचारोदितं भवान्।
जातिप्रथाविनाशाय व्यवस्थापयति ध्रुवम्।।९।।

अहो वत भवान् नूनं क्षुद्रकामाय नीचताम्।
आत्मनो ख्यापयत्येव साधु नैवं समाचरेत्।।१०।।

वेदैकगम्यधर्मस्य सम्यगाचरणात् तथा।
तदेकगम्याधर्मस्य हानाद् ब्रूते भवान् यदि।।११।।

लोकोच्छेदादिकं नूनं खलः स्तब्धः शठो भवान्
वेद एव महान् दोषः शाक्यादिकुकृतौ गुणः।
दृश्यते भवता नूनं हेतु स्तत्र विचिन्त्यते।।१२।।

क्षुद्रसत्तासुखास्वादे नेतु र्मग्नस्य नीचता-
ग्रन्थिप्रयुक्त्या वर्णेषु दीर्घविद्वेषवर्धनम्।।१३।।

वेदविद्वेषिणाञ्चैवं मनस्तुष्टि र्विधीयते।
अहो खल्वार्यदेशेऽस्मिन् वेदध्वंसाय चेष्टते।।१४।।

अल्पसंख्यकतावादी तद्ग्रन्थे दूषणेष्वपि।
मौनमालम्बते धूर्तो धिक् कष्टं किमतः परम्।।१५।।

वेदानुमोदितप्रायशिष्टस्मृतिप्रचोदितम्।
राजधर्मं तिरस्कृत्य गच्छन्तः कापथं किल।।१६।।

वेदवर्णाश्रमाचारदूषणे सन्ति लोलुपाः।
तत्र पूर्वोक्तहेतुभ्यो नान्यो हेतुः प्रदृश्यते।।१७।।

यत्तु वेदोदितैरेव धर्मै र्वर्णाश्रमस्थितैः।
दलितत्रासभूयस्त्वं प्रोक्तं वै पूर्वपक्षिणा।।१८।।

तत्र ब्रूमो वयं सम्यग् राज्ञो धर्माच्च्युति र्नृणाम्।
चेतांस्यकार्यकरणे पौनःपुन्येन चोदयेत्।।१९।।

राजन्यधर्मभूयिष्ठे हीनत्रासो भवेन्ननु।
साम्प्रतं हि प्रजातन्त्रं न्यायभङ्गाय विस्तृतम्।।२०।।

तत्र नूनं महामात्यै र्नैजदोषो महानपि।
अन्यत्रारोप्यते तूर्णं प्रजानां वीक्ष्य मूढताम्।।२१।।

राजतन्त्रे हि राजा नः सर्वशास्त्रविचक्षणैः।
अमात्यै र्निस्पृहैः सद्भिः धर्मतत्त्वे नियन्त्रितः।।२२।।

अधर्मप्रभवं नूनं प्रजात्रासमहन् द्रुतम्।
तस्मात् सदा सदामात्यैराराध्यो नृपति र्नृणाम्।।२३।।

प्रजातन्त्रेऽकृतात्मानः स्वार्थाय क्षुद्रजन्तवः।
वञ्चयित्वा प्रजा नूनं स्वार्थसाधनतत्पराः।।२४।।

कुर्वन्तः कुत्सितं कर्म क्षुद्रलाभाय पामराः।
भ्रामयन्ति वचोभङ्ग्या वेदवर्त्मानुगामिनः।।२५।।

एवं विभेदनीति वैं तेषां कामाय कल्पिता।
राष्ट्रमेव समुच्छेत्तुं जृम्भमाणा विलोक्यते।।२६।।

'षट्कर्मा ब्राह्मणस्तस्य त्रीणि कर्माणि जीविका।
इत्येतद्वेदलिङ्गोत्थन्यायसिद्धं हि वस्तु नः।।२७।।

हेतुजालं पुरस्कृत्य दूषयन्ति कुबुद्धयः।
पापास्ते नैव जानन्ति धर्मस्यालौकिकीं गतिम्।।२८।।

शाक्यादयो हि हेतून् वै स्वीकृत्य धर्मदेशनाम्।
कुर्वन्ति कामसिद्ध्यर्थं वेदे हेतु र्न दृश्यते।।२९।।

यस्मिन्नर्थे च लोभादि हेंतु र्दृश्येत कुत्रचिद्।
धर्मत्वं तस्य नेच्छन्ति दृष्टन्याया मनीषिणः।।३०।।

प्रजातन्त्रमिदं किन्ते नेक्षन्ते कामहेतवः।
यत्रोच्चैः पदलाभाय सांसदाः किन्न कुर्वते।।३१।।

सर्वे मुख्याधिकारित्वं वाञ्छन्तोऽपि बलीयसे।
भूयो द्रव्यं पदं वापि गृहीत्वा तत्त्यजन्ति वै।।३२।।

अङ्गनामधिगत्यापि सुरतस्वादवञ्चिताः।
कामार्ता इव नूनं ते प्रान्तुवन्ति च दुर्दशाम्।।३३।।

प्रधानपदवीं गुर्वीं कश्चिदेकोऽधिगच्छति।
अन्ये भवन्त्यसन्तुष्टा एतत् किं भो महाशयाः।।३४।।

स्वेष्टसंसाधनायैव हन्ति यत् प्रतियोगिनः।
इयं वः समतामूला व्यवस्था गौरवान्विता।।३५।।

यावज्जीवं दरिद्रोऽपि गृहीत्वा प्रोन्नतं पदम्।
वस्वकुप्यं समासाद्य द्रुतं मोमुद्यते कथम्।।३६।।

नूनं भवत्सुकृत्येन प्रजानां सुखमेधते।
वेदेनैव वराकेण प्रजात्रासो विधीयते।।३७।।

बलादाच्छिद्य लोकानां मताधिक्यं खला अपि।
साचिव्यलाभसंहृष्टा व्यालायन्ते प्रजाः प्रति।।३८।।

तेषु कोऽपि शठश्रेष्ठः प्रधानपदवीं गतः।
प्रजा आसाद्य मञ्चस्थो ब्रूते भ्रष्टः प्रिया गिरः।।३९।।

अहो धन्यं प्रजातन्त्रं यत्राहं शोषितोऽपि सन्।
राज्ञां पदमवाप्तोऽस्मि भवतां कृपया किल।।४०।।

तस्य श्रुत्वा वचःश्रेणीं वेणीमिव सुमोचिताम्।
प्रजाधनापहारित्वं तस्य विस्मृत्य सून्नताः।।४१।।

जनाः सर्वे प्रमुग्धास्ते करतालं वितन्वते।
प्रजातन्त्रस्य माहात्म्यं ब्रुवन्तो हर्षनिर्भराः।।४२।।

एते सर्वे महासत्त्वा वेदोक्तां धर्मपद्धतिम्।
वर्गद्विषाय राष्ट्रेऽस्मिन् खण्डयन्ति मुहुर्मुहुः।।४३।।

वस्तुतो भगवान् वेदः सकलान् मानवान् प्रति।
श्रेयः सम्पत्तिमुद्दिश्य शुभां दृष्टिं समीहते।।४४।।

एवं वेदस्य शुद्धत्वाद् मर्यादास्थापकत्वतः।
भारतप्राणभूतत्वाद् द्रढिम्नः स्वक्रियां प्रति।।४५।।

धर्माधर्मैकमूलत्वात् सौहार्दान्वितभावनाम्।
पुरस्कृत्यासुभङ्गेऽपि रक्षा तूर्णं विधीयताम्।।४६।।

न हि लोकसंग्रहख्यातिमात्रप्रयोजनको लोकं वञ्चयित्वापि सुगतादिभि भूतले प्रकटीक्रियमाणो दुर्गन्ध इव वेदोऽस्ति।

अनादिगुरुपरम्पराप्राप्तः सकलपरमर्षिशिष्टगणाद्रियमाणः खलु वेदो यस्य प्रामाण्यं नान्यसापेक्षमिति प्रसाधितमेव। पुरुषदोषदुष्टतया हि वाक्यस्याप्रामाण्यमायाति। वेदे पुरुषानुप्रवेशश्च पदपदार्थसम्बन्धद्वारेण वाक्यवाक्यार्थसम्बन्धद्वारेण भारतादिवद् वेदस्यैव वाऽपौरुषेयत्वाद् भवति। सर्वमेतद् निराकृतं तर्कचरणे। अतः पुरुषानुप्रवेशशून्यत्वात् कथं तस्याप्रामाण्यशङ्कापि येन तं प्रत्यनाश्वासः स्यात्। अतः स भगवान् यथा नियोजयति तथैव नियुज्यमानः पुरुषः फलमधिगन्तुमलं नान्यथा। नासौ भगवान् पर्यनुयोक्तव्यः कथमयमेवं विधत्त इति। सकलानेव मानवान् साधारणे सत्यादिधर्मे नियुङ्क्ते। यदि ज्योतिष्टोमादिविषये त्रैवर्णिकानेव विदुषोऽधिकरोति तदा नैव शूद्रैः क्लेशः कार्यः। तदाचरणे हि तस्यानर्थ एव पापीयान् सम्पत्स्यते। यत्र नानर्थस्तत्रर्षिभि स्तदर्थोपबृंहणप्रकारैः पुराणैस्तानुपकरोत्येव।

उक्तञ्च—

**'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः'। इति।**

ब्राह्मणमग्रतः कृत्वा चत्वारोऽपि वर्णाः पुराणानि शृणुयुरिति तदर्थः। न च वक्तव्यं संस्कारादिकृतो वर्णप्रविभाग इति। अनादित्वात् तस्य। इतरेतराश्रयादपि तस्यानादितेति वार्तिकारपादाः। संस्कारवशेन ब्राह्मणत्वादिप्रविभागः, ब्राह्मणत्वादिप्रविभागवशेन तत्संस्कार इतीतरेतराश्रयता। ब्राह्मणादिमातापितृजन्यत्वज्ञानसचिवं प्रत्यक्षमपि तत्र प्रवर्तत इत्यर्थवादाधिकरणे प्रथमसूत्र एव वार्तिककारपादा आहुः। एतेन वर्णप्रविभागविध्वंसनप्रयासो धर्मनिरपेक्षशक्तीनां सन्धुक्षितमुण्डे नूनमेरण्डस्नेहेन कुञ्चितकेशोद्भावनप्रयास इवैवावतिष्ठते। व्यर्थ एव तेषां कुधियां प्रयासः। अथवा सार्थक एवेति प्रतिभाति। कथमन्यथा राष्ट्रविनाशः स्यात्। को हि सचेता विश्वासमुपेयात् सनातनमर्यादां तिरस्कृत्य वर्णसाङ्कर्येण राष्ट्रसमृद्धिः स्यादिति। अध्यापनं शास्त्राणां याजनं प्रतिग्रहोऽपि ब्राह्मणस्यैव कार्यताकोटिमधिरोहति। अब्राह्मणस्तथा कुर्वाणो नूनं यावत्कल्पं कुम्भीपाकेषु पच्यत इति शास्त्रबलादेव निश्चीयते। अतः स्वे स्वेऽधिकार एव प्रयासो विधेय इति वेदतात्पर्यम्। त्रैवर्णिकैरपि

यथाशास्त्रमेव प्रवर्तितव्यम्। यदि सोमपाने ब्राह्मण एव क्षत्रियस्तु न्यग्रोधस्तभिनीरसपान एवाधिक्रियमाणो वेदेन दृष्यते स्मृतिरपि तथाभूतैवास्ति तदा धर्मनिरपेक्षसत्त्वानामनवसर एव चेतसो दूयमानता महिषीगर्भविमोचने तत्पुत्रगुह्यव्यथेव। हन्त! अकारणमेव वैरभावस्त्रैवर्णिकेषु केवलाल्पसंख्यकमतापेक्षिणाम्। कलहस्तु भ्रातृणामेकजातानां लोके विलोक्यते। यदि प्रजानां भवेत् तर्हि राजदण्डेन निवारणीयो भवति। नात्र वेदतदुदितवर्णाश्रमधर्मापराधः। वेदतद्गम्यधर्मालोचनायै हीनेषु त्रैवर्णिकप्रयुक्तात्याचारोद्भावनं वैदिकतामूलकतया केषाञ्चिद् यदस्ति तत्रोच्यते—

वेदैकगम्यधर्माणामतिक्रमवशात् पुनः।
योऽयं भवेत् कदाचारः शासकस्तत्र दुष्यति।।४७।।

तस्य प्रमादभूयस्त्वात् स्वेच्छाचारः प्रजासु यः।
शासकेनैव वा तस्य प्रतीकारो विधीयते।।४८।।

दण्डः प्रजापितित्वेन समाख्यातो महीतले।
दण्डभीत्यैव सर्वेऽपि भवन्ति नयगामिनः।।४९।।

दण्डप्रयोगविद् राजा माननीयो भवेद् ध्रुवम्।
अन्यया नरके तस्य निवासं मनुरब्रवीत्।।५०।।

'अदण्ड्यान् दण्डयन् राजा दण्ड्याँश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति।
एतस्मात् कारणादेव सदामात्यैः समन्वितः।
कुर्वन् सदा निजं कर्म यशस्वी स महानभूत्।।५१।।

यदा स एव दुर्भागैश्चाटुकारैः समावृतः।
आलम्बते कदाचारं भ्रष्टाचारस्ततो भवेत्।।५२।।

'स दोषः सचिवस्यैव यदसत् कुरुते नृपः।
यान्ति यन्तुः प्रमादेन गजा व्यालत्ववाच्यताम्।।५३।।

इति प्रसन्नगाम्भीर्यसूक्तिद्वारा विदांवरः
तत्त्वं विशाखदत्तोऽपि प्रोक्तवान् स्वीयनाटके।

सूचकाश्चाटुकारा हि साधुनिन्दाविधायिनः
शासकं सद्गुणाख्यातं कुर्वन्त्यन्धं निरङ्कुशम्।।५४।।

तत्प्रभावात् प्रजायेत प्रबलैरेव दारुणैः।
दुर्बलत्रासबाहुल्यं नात्र धर्मस्य हेतुता।।५५।।

एवं सत्यपि तथ्यं ये त्वपहनुत्य कुमार्गिणः।
आलोचयन्ति वेदं वा वर्णधर्मांस्तदुद्भवान्।।५६।।

नूनं वैदेशिकैस्तेषां वेदतन्मार्गरोधिभिः।
राष्ट्रविध्वंसनायैव गुप्तसन्धि र्विलोक्यते।।५७।।

येऽपि च नास्तिका दुष्टाः पूर्वमासन् विदूषकाः।
वेदानां तान् वै सर्वान् शस्त्रकाराः सुमेधसः।।५८।।

न्याययुक्तीः समाश्रित्य निराकुर्वन् नृशान्तये।
अद्यापि ते कदाचारा निराकार्याश्च वैदिकैः।।५९।।

तुच्छपीठैकलाभाय वेदधर्मनिराक्रिया।
दुष्टै र्विधीयते यत्तु तद्वै भारतदूषणम्।।६०।।

वेदैकमार्गनिष्ठानामस्तित्वं वाऽपलप्यते।
वेदमात्रेण राष्ट्रस्य समृद्धि र्यै र्न ज्ञायते।।६१।।

'व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति।
इत्येवं सूरिवर्येण कौटिल्येन महात्मना
लोकप्रसादभूयस्त्वं वेदेनैवेति भाषितम्।।६२।।

सिद्धमेतदतो वेदवर्णाश्रमविखण्डनम्।
पापिष्ठैरेव दुष्टात्मतुच्छस्वार्थै र्विधीयते।।६३।।

प्रयोजनन्तु राष्ट्रविनाशकरणं पूर्वपक्षे सिद्धान्ते तु भूमण्डले भारतस्याक्षय्यसमृद्धिसंवर्धनमिति सिद्धान्तपक्षप्रतिपादनेनैव स्पष्टम्।

।।इति पातित्यपेटिकायां प्रथमं वर्णाश्रमधर्मव्यवस्थापनाधिकरणम्।।

## अथ द्वितीयं समुद्रयात्रायाः पातित्यप्रयोजकत्वाधिकरणम्

'विधेरेव धर्माधर्मयोः स्वातन्त्र्येण प्रामाण्यमिति चोदनालक्षणोऽर्थो धर्म' इति धर्माधर्मप्रामाण्यप्रतिपादनपरसूत्रेऽवधारणद्वयदर्शनादवगम्यते। चोदना प्रमाणमेव न त्वप्रमाणमिति तद्बोध्यस्याग्निहोत्रादे धर्मत्वमस्त्येव न तु नास्तीति धर्मसामान्यलक्षणमप्यर्थात् सिध्यति। चोदनैव प्रमाणं न प्रत्याक्षादिरिति तद्गम्यस्याग्निहोत्रादेरेव धर्मत्वं न चैत्यवन्दनादेरतद्-गम्यत्वादिति धर्मविशेषलक्षणमपि। तदेकवाक्यत्वादङ्गत्वाच्चार्थवादमन्त्र-योरपि प्रामाण्यं व्यवस्थितमस्ति। विधिसिद्धा अपि धर्माः पुरुषसामर्थ्यवशेन तत्तदधिकारिणः प्रति व्यवस्थिता अपि युगविशेषे वर्ज्या भवन्ति। तदनुष्ठाने सामर्थ्याभावादेवेति—

'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'त्यभियुक्त-वचनेनावसीयते। निषेधविषयविषयकत्वेनैवं केचनाभ्यनुज्ञाता अपि देवरकर्तृकसुतोत्पत्तिप्रभृतयः कलिवर्ज्या भवन्ति। स्मृतिशास्त्रेण निषिद्धानि कर्माणि आचारपरम्परायां वर्तमानान्यपि न धर्मपदवाच्यतामञ्चन्ति। एतत्तु—

'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इत्यत्र वार्तिक एव प्रपञ्चितम्। यस्मिन्नाचारे लोभादिकारणमन्वेषणे कृतेऽपि न विलोक्यते स आचारो धर्म एव, यत्र तु लोभादिकारणं दृश्यमानं भवति तत्र न धर्मता। यथा मातुलकन्याविवाहे समुद्रयातु द्विजस्य कृतप्रायश्चित्तस्यापि ज्ञातिभिः स्वीकारे कलौ युगे। समुद्रयात्रा लोभादिसमवधान एव भवति। एवं मातुलकन्यापरिग्रहोऽपि। अद्य तावत् वायुयानेन म्लेच्छदेशगमनप्रवृत्ति दृश्यते जनस्य। ज्ञातयोऽपि तं न परित्यजन्ति।

अत एव विषयममुमुद्दिश्यैव विचारो विधीयते लोकभ्रान्तिनिरासाय। किं समुद्रोलङ्घेन पाश्चात्यदेशगमनं पातित्यप्रयोजकमुत नेति? तदर्थं च

तस्याधर्मत्वमुत नेति। कुतः संशयः? शिष्टत्वाभिमानिभिरपि तद्यात्रायाः क्रियमाणत्वाद् भवत्येव संशयः। यद्यधर्मः स्यात् समुद्रोल्लङ्घनं ततः कुतः शिष्टानां प्रवृत्तिः स्यात्? सामुद्रिकस्य श्राद्धभोजननिषेधात् तस्या अब्धियात्राया अधर्मत्वबुद्धिरपि भवति। एवं संशये जायमाने किं तावत् प्राप्तम्? उच्यते—

**वेदेनाप्रतिषिद्धत्वाच्चारित्रस्योपत्तये।**
**ब्राह्मणानामनुज्ञानाद् दोषाभावाद् विमानतः।।१।।**
**विश्वबन्धुत्वसिद्धेश्च नाब्धियात्रा द्विजन्मनाम्।**
**अधर्मः स्यात्तथा नापि पातित्यस्य प्रयोजिका।।२।।**

द्विजन्मनां त्रैवर्णिकानामपि समुद्रयात्रा नाधर्मः नापि पातित्यप्रयोजिका। कुतः? वेदेनाप्रतिषिद्धित्वात्। न हि तादृशो वेद इदानीमुपलभ्यते यत्र समुद्रयात्राप्रतिषेधो दृष्टिगोचरः। तथा सत्यप्रतिषिद्धैव समुद्रयात्रेति गम्यते। एवं सति प्रयोजनविशेषेण तत्कर्तव्यताऽयत्नसिद्धैव चाटुप्रयोगेण धनप्रयोगेण वा साम्प्रतिकपदप्रतिष्ठेव। अपि च पृथिव्यां वर्तमानानां पुरुषाणां स्वस्वचारित्र्यशिक्षणाय ब्राह्मणेभ्योऽस्त्येवाभ्यनुज्ञा सर्वज्ञकल्पस्य भगवतो मनोः। तथा चाह स एव भगवान्—

**'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**

एतत् सर्वं नर्ते समुद्रगमनात् सम्भवति। सर्वत्र वेदैकसमधिगम्यो धर्मः प्रसरेदित्येवं कर्तव्यैव समुद्रयात्रा विशेषतो वैदिकब्राह्मणैः। अपि च नौयात्रा प्रतिषिद्धत्वेन गम्यते कलिवर्ज्यप्रकरणे न विमानतः। तथा च वचनम्—

**'द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः'।।इति।**

कलौ नेत्यर्थः। समुद्रस्य नाव्यत्वे नैकविधविघ्नसत्त्वात् कालाधिक्याच्च नित्यनैमित्तिककर्मलापेन पातित्यसम्भावनया प्रायश्चित्तोपत्तिः। कलौ प्रचुरकालं कर्मलोपनिमित्तिकदुरितबाहुल्यात् प्रायश्चित्तेनापि तदक्षयात् ज्ञातिभि स्तस्य त्याज्यता सुतरामुपपद्येत। सम्प्रति तु विज्ञानप्रयत्नचमत्कारबहुले लोके विशेषविमानेन स्वल्पकालेनैव

समुद्रमुल्लङ्घ्य अमेरिकादिदेशप्राप्तिसम्भवात् स्वकार्यकरणे धर्मप्रचारे च दोषाभावात् कर्तव्यैव सा। एतत्तु राष्ट्रियसमृद्धिसम्पादनस्याप्युपलक्षणम्। वैदेशिकमुद्रासञ्चयो राष्ट्रविभुतासम्पादनहेतु र्नूनमेव। यो हि गच्छेत् स नूनं वैदेशिकमुद्रा आनयेदेव। तथा सति राष्ट्रसमृद्धिः परिवर्धेत। विश्वबन्धुत्वसिद्धिरप्येवं भवेत्। तथा चोक्तम्।

**'अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानान्तु वसुधैव कुटुम्बकम्'।। इति।**

पूर्वन्तावत् सार्वभौमो राजाऽसीत्। तदा तस्यैव शासने सम्पूर्णा वसुन्धराऽऽसीत्। तद्वंश्यानामेव तत्र तत्र विभागः समजनि सौकर्यायेति पुराणादिषु प्रसिद्धम्। अतः सङ्कुचितां दृष्टिं व्युदस्य बहुगुणस्वारस्याच्च कर्तव्यैव समुद्रयात्रा। तथा च गच्छन्त्येव द्विजन्मानो यतिप्रवरा वैष्णवा अपि तथाकथितपीठसमाश्रयाः। आचार्या अपि स्वामिनारायणीया-स्तत्साधवश्च तथा पाङ्क्तेया यथावसरं गच्छन्ति प्राप्नुवन्ति च समीहितमर्थजातमुपदिशन्ति च धर्मतत्त्वं भारतस्य लोकोत्तरतामापादयन्तः। तेऽधुना ज्ञातिभिः पूज्यन्ते न स्वप्नेऽपि त्यज्यन्ते च। अतस्तद्विद्वेषकाः पाखण्डिन एव वराकाः। इत्येवं प्राप्ते ब्रूमः—

**कलिवर्ज्यतया तस्या दोषवत्त्वस्य निश्चयात्।**
**वार्तिके च तथा सम्यक् त्यागपक्षपरिग्रहात्।।२।।**
**प्रतिषेधैकवाक्यस्य श्रूयमाणतया क्वचित्।**
**यात्रा सामुद्रिकी नूनं पातित्यस्य प्रयोजिका।।३।।**

समुद्रयातुः कृतप्रायश्चित्तस्यापि स्वीकारस्य कलिवर्ज्यप्रकरणे वर्जनीयत्वेन वर्णितत्वात् सामुद्रिकी यात्रा पातित्यस्य प्रयोजिकैवेति दोषाधिक्यान्निश्चीयते। तथा च कर्मणा पातित्यमिति हेमाद्रौ शतातपः।

**'कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु।**
**द्वापरे त्वन्नमादाय कलौ पतति कर्मणा'।।**

तथा च—

**त्यजेद् देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।**
**द्वापरे कुलमेकन्तु कर्तारं तु कलौ युगे'।। इति।**

अत्र 'कर्तुस्त्यागविधानेन तदीयसाक्षात्संसर्गस्य यथाप्राप्तनरकहेतुतया दृढीकरणादित्याहु धर्मतत्त्वविदः श्रीमदनन्तदेवाः। एवं यस्य समुद्रोल्लङ्घनपूर्वकम्लेच्छदेशयातुः संसर्गोऽपि नरकप्राप्तिहेतु स्तस्य पातित्ये शङ्कैव न कर्तव्या। पतित एवासौ भवति सर्वधर्मानुष्ठानवर्जितो वराकः पाश्चात्यदेशं गच्छन् मदनाविर्भावमूर्च्छितः कामीव वनिताकुचकलशयोः।

कलिवर्ज्यानि तावद् बृहन्नारदीये—

**'समुद्रयातुः स्वीकारः कमण्डलुविधारणम्।**
**द्विजानामसवर्णासु कन्यासूपयमस्तथा।।**

**दत्ताक्षतायाः कन्यायाः पुन र्दानं परस्य च।**
**मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा।।**

**देवराच्च सुतोत्पत्ति र्मधुपर्के पशो र्वधः।**
**दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।।**

**महाप्रस्थानगमनं गोमेधश्च तथा मखः।**
**इमान् धर्मान् कलियुगे वर्ज्यानाहु र्मनीषिणः।।**

तथा च हेमाद्रावादित्यपुराणे—

**'विधवायाः प्रजोत्पत्तौ देवरस्य नियोजनम्।**
**बालायाः क्षतयोन्यास्तु वरेणान्येन संस्कृतिः।।**

**कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः**
**आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्।**
**द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः**
**सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम्।।**

**महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे।**
**सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः।।**

**अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः।**
**वृत्तस्वाध्यायसापेक्ष्यमघसङ्कोचनन्तथा।।**
**प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम्।**
**संसर्गदोषः स्तेयाद्यन्यमहापातकनिष्कृतिः।।**

**एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः।**
**निवर्तितानि विद्वद्भि र्व्यवस्थापूर्वकं बुधैः।।**

न चात्र वेदे निषेधाभावान्न दोष इति वाच्यम्। यतो हि साधूनां समयस्यापि वेदवदेव प्रामाण्यमुक्तम्—

**'समयश्चापि साधूनां प्रमाणं वेदवद् भवेत्'। इति।**

वैदिकेभ्यः 'नान्तमियात् न प्रत्यन्तमियादिति श्रूयते एव प्रतिषेधः।

अत्रान्यान्यपि कलिवर्जनीयत्वेन चोदितानि कर्माणि सन्ति। जिज्ञासुभिस्तानि हेमाद्र्यादिग्रन्थेभ्योऽवगन्तव्यानि। प्रकृतमुपसरामः।

यत्तूक्तं विमानविशेषेण यात्रायां न दोष इति। तन्न। साध्यकोटिकोऽयं यात्रानिषेधो न साधनकोटिक इत्याहुरस्मदुपाध्यायाः श्रीमनुदेवभट्टाचार्याः। कुत एवमिति चेत्? श्रूयताम्। 'समुद्रयात्रास्वीकार' इति सामान्येन समुद्रयात्राया निषेधावगमात्। तीर्थोद्देश्यकयात्रानिषेध इति तीर्थयात्राऽतिदूरत इति माधवोदाहृतवचसैकमूलश्रुतिकल्पनालाघवात्। तीर्थोद्देशेनापि चातिदूरेऽर्थात् पारेसामुद्रं न गच्छेदिति यदा निषेध स्तदा दृष्टलोभादिमूलकयात्रायाः सुतरां निषेध इति तात्पर्यमवसीयते। अपि च भारत एव यदा तीर्थोद्देशेन क्रियमाणा यात्रा भवेत् तदा न पातित्यं यदा च लोभादिमूलकतया विधीयते तदा पुनः संस्कारविधानात् पातित्यमवगम्यते किम्पुनः सर्वथा सर्वविधभ्रष्टप्रायजन्तुबहले देशे। तथा चोक्तमेव—

**'अङ्गबङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।**
**तीर्थयात्रां विना यातः पुनः संस्कारमर्हति'।।** इति।

अत्र तीर्थानुद्देश्यकयात्रा पद्भ्यामेव शकटेनैव वा दोषावहा, न विमानेन हनूमत इव मानसेच्छया वेति वक्तुं शक्यते? कथमपि न। तेषु विषयेषु प्राप्तिमात्रस्य दोषवत्त्वात्। इयाँस्तु विशेषः। तीर्थानुद्देश्यकाङ्गादियात्राप्रयुक्तपातित्यस्य क्षपणहेतुः प्रायश्चित्तात्मकः पुनः संस्कारोऽस्ति विहितः संस्कृतस्य च ज्ञातिभिः स्वीकारोऽपि। समुद्रोल्लघनपुरःसरम्लेच्छबहुलपाश्चात्यदेशयात्राप्रयुक्तपातित्यस्य क्षपणहेतुः संस्कारः स्वीकारश्च ज्ञातिभिरित्युभयं नास्ति। 'शोधितस्यापि संग्रह' इति वचनेन तथैवावगमात्।

अनेन धर्मोपदेशार्थं वैदेशिकमुद्रानयनद्वारा राष्ट्रसमृद्धिपरिपोषणार्थं तद्यात्राया अवश्यकर्तव्यताऽवगम्यते इति यदुक्तं तदपि परास्तं वेदितव्यम्। भारत एवागत्य तेषां स्वस्वचारित्र्यशिक्षणोपपत्तेः शूद्रादिमाध्यमेन वैदेशिकमुद्राधिगमसम्भवाच्च।

अपि च श्राद्धे सामुद्रिकस्याधिकाराभावोऽपि पुराणेषु विद्यमानो द्योतयत्येव तस्य पातित्यम्। तथा हि भारते दानधर्मेषु श्राद्धवर्ज्यविप्राधिकारे—

**कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः**
**ग्राम्यप्रेष्यो वार्धुषिको गायकः सर्वविक्रयी।**
**सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः**
**पित्रा विवदमानश्च यस्य चोपपति र्गृहे।।**

**अभिशस्तस्तथा स्तेनः शिल्पं यच्चोपजीवति।**
**पर्वकारश्च सूची च मित्रधुक् पारदारिकः।।**

**अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च।**
**श्वभिश्च यः परिक्रामेद् यः शुना दष्ट एव च।।**

**परिवृत्तिस्तथा स्तेनो दुश्चर्मा गुरुतल्पगः**
**कुशीलवो देवलको नक्षत्रै र्यश्च जीवति।**
**ईदृशा ब्राह्मणा ज्ञेया अपाङ्क्तेया युधिष्ठिर!।।**

आपाङ्क्तेयाः पङ्क्तावव्यवहार्या इत्यर्थः। अपि च तन्त्रवार्तिके श्रीभट्टपादानां समुद्रयात्रायास्त्यागपक्षस्यैव परिग्रहात् तस्या अधर्मत्वं पातित्यप्रयोजकत्वञ्च गम्यते। अन्यथा सकलशास्त्रार्थतत्त्वदर्शी वार्तिककारः कथमेवं प्रतिपादयेत्। तथाहि-बौधायनेन 'पञ्चधा विप्रतिपत्तिः दक्षिणतः, अनुपनीतेन च भार्यया च सह भोजनं पर्युषितभोजनं पितृष्वसृमातुलदुहितृपरिणयनमिति। तथोत्तरतः पञ्चधा ऊर्णाविक्रयः सीधुपानमुभयतो दद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति' इति विरुद्धशिष्टाचरणान्यनुक्रम्य इतर इतरस्मिन् कुर्वन् दुष्यति नेतरस्मिन् देशप्रामाण्यादित्यनेनापस्तम्बोक्तमेवोपन्यस्य मिथ्यैतदिति गौतमः, उभयं त्वेतद् नाद्रियन्ते शिष्टस्मृतिविरोधदिति निराकृतम्। एतस्य सर्वस्यैव

दुराचारत्वं तन्त्रवार्तिके प्रतिपादितम्। मातुलकन्यापरिणयवत् तेन समुद्रयात्राया अपि पातित्यप्रयोजकत्वमधर्मत्वञ्चेति सिद्धत्येवायत्नत इति श्रुतिस्मृतिप्रतिषेधबलेनावगम्यते।

एतेनेदानीं द्रव्यादिलोभप्रवृत्तकृतिसाध्यत्वादाधुनिकानां यतीनां तथाकथितपीठसमाश्रयाणां वैष्णवानां पाङ्क्तेयानाञ्च विप्राणां समुद्रयात्रा गर्हणीयतामुपैत्येव पारलौकिकसकलफलपराङ्मुखानाम्। ततः किमित्युच्यते—

**तेनैवं स्थितमेवैतत् संसर्गोऽज्ञानतो यदा।**
**सामुद्रिकैस्तदा कृत्वा प्रायश्चित्तविधिं पुनः।।५।।**

**पारलौकिकधर्मोऽत्र कर्तव्योऽधिकृतै र्जनैः।**
**अन्यथा, क्रियमाणोऽपि नासौ धर्मः फलप्रदः।।६।।**

यदि बुद्धिपूर्वकं मोहजाड्यात् संसर्गं सामुद्रिकैः सह कुर्यात् तदा नेह प्रायश्चित्तेनापि शुद्धिरित्यर्थाद् गम्यते। भवन्ति चात्र संग्रहश्लोका—

**आत्मनः श्रेय इच्छन् वै मतिमान् धर्मवित् सदा।**
**समुद्रयातुः संसर्गं वार्धके मैथुनं यथा।।७।।**

**विवर्जयेत् प्रयत्नेन धर्मानुष्ठानतत्परः।**
**शिष्टा हि संगतिं नैव कुर्वन्ति पतितैः सह।।८।।**

**दैवे पित्र्ये तथा नित्ये धर्मे नैमित्तिकेऽपि च।**
**नित्याधिकारसिद्ध्यर्थं भ्रष्टास्त्याज्या मनीषिभिः।।९।।**

**'त्यजेदेकं कुलस्यार्थे ग्रामार्थे च कुलं त्यजेत्।**
**ग्रामं जनपदस्यार्थे आत्मार्थे पृथवीं त्यजेत्।।१०।।**

**इत्येवं भूयसां नीति श्चोदिताऽनुग्रहात्मिका।**
**ग्राह्या शिष्टैः सदा भक्त्या श्रेयोमार्गस्थितैरिह।।११।।**

**नीरजस्कां स्त्रियं को हि बुद्धिमान् भूषितामपि।**
**मन्मथाक्रान्तदेहोऽपि वाञ्छेत् स्वास्थ्यविरोधिनीम्।।१२।।**

प्रयोजनन्तु विशेषतः पूर्वोत्तरपक्षाभ्यामेव प्रतिपादितं वेदतिव्यम्।

**।।इति पातित्यपेटिकायां द्वितीयं समुद्रयात्रायाः पातित्यप्रयोजकत्वाधिकरणम्।।**

# अथ तृतीयं पतितानां सामान्यधर्माधिकारव्यवस्थापनाधिकरणम्

पूर्वाधिकरणे कलौ सद्भिः सर्वथा त्याज्यानां समुद्रलङ्घनकर्तॄणान्तथाऽन्येषामपि ब्रह्मवधसुरापानग्रामकुक्कुटतदण्डभक्षकाणां संसर्गत्यागः 'प्रतिपादितः। तत्र पतितसंसर्गिणान्तथा तथाविधपारलौकिकशुद्धिशून्यानां तद्युक्तलौकिकशुद्धिशून्यानाञ्च पतितानां धर्मविषयकव्यवस्थाविधानार्थमिदन्तावद् विचार्यते—किं तथाविधपतितानां सर्वविधधर्मानधिकारिता उत सामान्यमानवमात्राचरणीयं धर्ममनुष्ठातुं शक्नुवन्ति त इति? कुतः सन्देहावसरः? धर्मस्य चोदनामात्रगम्यत्वाच्चोदनायाश्च त्रय्यन्तर्गत्वाद् वैदिककृत्यबहिष्करणीयत्वेनाग्निहोत्रसन्ध्यावन्दनादिवत् सत्यादिसामान्यधर्मेभ्योऽपि तेषां बहिष्करणीयता तथा विशेषाग्निहोत्रादिधर्मेषु विशेषयोग्यताया अपेक्षितत्वेन तादृश-योग्यताया निरस्तत्वात् विशेषधर्माधिकाराभावेऽपि सामान्यसत्यादिधर्मानुष्ठाने बाधकाभावाद् भवत्येव सन्देहः। किन्तावत् प्राप्तम्? सर्वविधधर्मानधिकारितेति। कुतः? उच्यते—

> **धर्माधिकारे सर्वस्य संस्कारापेक्षिता ध्रुवम्।**
> **तदभावे कृतो धर्मः कथं वै फलयुग् भवेत्।।१।।**
> **संस्कृतस्यापि पातित्यात् संस्कारो निष्फलायते।**
> **अत एव यथाशास्त्रं प्रायश्चित्तीयते नरः।।२।।**
> **'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि'।।**
> **प्रायश्चित्तशतेनापि यस्य शुद्धि र्न जायते।**
> **कथङ्कारं भवेत्तस्य लोके धर्माधिकारिता।।३।।**
> **निष्फलत्वात् ततः सर्वे पातित्यपङ्कदुर्मुखाः।**
> **संसर्गिणोऽपि दूरे स्युः सत्यदानादिधर्मतः।।४।।**
> **संस्कारव्रतपूर्णा ये ये च सद्वृत्तशालिनः।**
> **धर्मज्ञसमयोपेतास्तेषां सत्यादयः शुभाः।।५।।**

**धर्मज्ञसमयो यैस्तु त्यज्यते वै पदे पदे।**
**तेषामुदरतुष्टानां धर्मानुबन्धिता कुतः।।६।।**

अत्र पतितसंसर्गत्यागविधानेन तदीयसाक्षात्संसर्गो यथाप्राप्तनरक-हेतुरिति नास्ति विप्रतिपत्तिः। संसर्गिणस्तथाविधस्य संसर्गप्रयुक्तनरक-निवारणप्रायश्चित्तमपि नास्तीति विपश्चिद्न्यायानुप्राणित-व्याख्यानपर्यालोचनादवगम्यते। संसर्गिसंसर्गस्तु युगत्रये दोषाधायकोऽपि कलौ सम्भाषणादिरूपोऽसौ न दोषावह इति यद्यपि निश्चीयते तथापि शिष्टव्यवहारे संसर्गिणि विवाहादिव्यवहारः परिह्रियत इति कृत्वा पतितविषयकधर्मव्यवस्थापनार्थेऽस्मिन्नधिकरणे संसर्गिणोऽपि परिगृहीता इति सूरिभि र्नात्र नासिकासङ्कोचः कार्यः। गर्भाधानादिसकलापेक्षितसंस्कारा जनस्य धर्माधिकारयोग्यतासम्पादनाय व्रीह्यादिसंस्कारवदुत्पत्त्यपूर्व-सम्पादनाय भवन्ति। असत्येवं संस्कारविधायकवचनानि निरर्थकान्येव भवेयुः। धर्माधिकारे संस्कारपेक्षा निश्चीयत इत्यर्थात् तदभावे धर्मस्य फलानुबन्धित्वाभावः। तथा सति संस्कारविहीनेन पुंसा क्रियमाणो धर्म एव न भवति। संस्कृतेनैव पुंसाऽनुष्ठीयमानस्य धर्मत्वस्वीकारात्। संस्कारसंस्कृतोऽपि धर्मज्ञसमयोलङ्घनात् दोषबहुलात्यन्तविगर्हित-कर्माचरणाच्च पतितो भवति। पातित्याच्च संस्कारः पूर्वं कृतोऽपि क्लैव्यमापन्नस्य सुरतसम्पादनाक्षमत्वमिव धर्मत्वविघातकत्वेन निष्फलतामापद्यते। तत्साफल्यं विधातुमेव नरः प्रायश्चित्तार्हतामुपयाति यथाविधानम्। तस्य महापापनाशकत्वेन शास्त्रेषु व्यवस्थितत्वात्। यस्य प्रायश्चित्तशतेनापि शुद्धि र्न श्रूयते नापि स्मर्यते तस्य कथं लोके धर्माधिकारः स्यात्? ननु विशेषधर्मेषु सन्ध्यावन्दनाग्निहोत्रादिलक्षणेषु संस्कारापेक्षितत्वेन तत्राधिकारासम्भवेऽपि व्रतोपवासतीर्थस्नानसत्यवदन-दानानसूयाधृतिदमादिलक्षणेषु सामान्यधर्मेषु तदपेक्षाविरहात् कथं तेषामधिकारो न सिद्ध्येदिति चेत्? न। एवं सति शूद्रप्रभृतीनां मुण्डनविवाहादिसंस्कारो न सिद्ध्येत्। शास्त्रे तेषामपि संस्कारस्य यथापेक्षितं श्रुतत्वात् सामान्योक्तधर्मेष्वपि संस्कारापेक्षिता भवत्येव। न च तेषामपि क्वचिद् विशेषधर्मसम्पादनायैव संस्कारविधानं न तु सामान्यधर्मसम्पादनायेति वाच्यम्। सर्वथा विशेषधर्माधिकारशून्यानां

चाण्डालप्रभृतीनां विवाहादिसंस्काराभावप्रसङ्गात्। एवं संस्काराणां सामान्यधर्मोपयोगिता नापलपितुं शक्येति पातित्यपङ्कदुर्मुखाणां तत्संसर्गिणाञ्च सत्यदानादिधर्माणामपि निष्फलत्वात् ते तेभ्यो दूर एव भवेयुरिति। सत्यादयो हि धर्माः संस्कारव्रतपूर्णानां सदाचारनिष्ठानां धर्मज्ञसमयोपेतानामेव ब्राह्मणादिचाण्डालपर्यन्तानां वैदिकमार्गानुगामिनां शुभावहा भवन्ति, न तद्विपरीतानां पदे पदे धर्मज्ञसमयत्यागोत्साहसम्पन्नानां लोभैकदृष्टीनामुदरपरिपोषणमात्रतुष्टानाम-धोवर्त्मगामिनां वराकाणाम्। अतस्तेषां न केनापि प्रकारेण धर्मानुबन्धिता सिद्ध्यतीत्येवं प्राप्ते ब्रूमः—

**नित्यनैमित्तिकत्वाभ्यां काम्यत्वेन तथा पुनः।**
**धर्माणां सुव्यवस्था हि शास्त्रेषु परिदृश्यते।।७।।**
**त्रिधा व्यवस्थिता धर्मा उभयरूपतया श्रुताः।**
**सामान्यकाम्यधर्मेषु दोषो नास्त्यकृतेष्वपि।।८।।**
**यद्यपीह तथा सम्यक् आद्ययो र्विरहे सति।**
**प्रत्यवायप्रसक्ति र्वै वारणीया कथं भवेत्।।९।।**
**पातित्येऽपि पुनश्चैव प्रत्यवायजिहासया।**
**सत्यदानादिधर्मेषु युज्येरन् पतिताः सदा।।१०।।**
**प्रगाढान्धतमिस्रायां पुनः पातो न युज्यते।**
**सत्येवं ते पुन र्नूनं नाचरेयु र्विधर्मिताम्।।११।।**
**सत्याचारव्रतोद्दीप्तभगवद्भक्तिवर्त्मनि।**
**वैष्णवाख्येऽधिकारस्तु समेषामिह चोदितः।।१२।।**
**पतितानामपि प्रायस्तत्र लिङ्गं विलोक्यते।**
**अत एव तथात्मानं प्रपन्नो मनुते सदा।।१३।।**
**एवं नित्यादिधर्माणामन्यथानुपपत्तितः।**
**शिष्टै र्बहिष्कृतानां वै सत्याद्यधिकृति र्मता।।१४।।**

नित्यनैमित्तिककाम्यप्रभेदेन श्रुतिस्मृतिषु धर्माणां त्रेधा व्यवस्थाऽस्ति। नित्यनैमित्तिकयोस्तु निमित्तस्य नियतानियतत्वाभ्यां ब्राह्मण-परिव्राजकन्यायेन भेदः। वस्तुतस्तु तयोरुभयोरपि नित्यत्वेनैव व्यवहारः शास्त्रे दृश्यते। एवं सति नित्यकाम्ययो र्धर्मयो र्वैधर्म्यं शास्त्रकाराः

स्वस्वयुक्तिदार्ढ्येन प्रतिपादयन्ति। नित्ये यथाशक्तिन्यायः काम्ये च सर्वाङ्गोपसंहारो ऽभिलषितः। नित्ये हि श्रूयमाणं निमित्तमेवाङ्गसङ्कोचे प्रधानतया हेतुः। 'अहरहः सन्ध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहोतीत्येवमादिविशेषधर्मविधायकवाक्येषु तथाऽकरणे दोषनिश्चयात् महाशिवरात्रिरामनवमीकृष्णजन्माष्टम्येकादशीसत्यदानादिसामान्यधर्मविधायकवाक्येषु यावच्छब्दसंबन्धाज्जीवनं तत्तद्धर्मनिमित्तत्वेन ज्ञायते। निमित्तस्यैतदेव रूपं यत् तस्मिन् सति नैमित्तिकमवश्यं कर्तव्यम्। अर्थात् नियतमेव नैमित्तिकं कर्म कर्तारं फलसंपृक्तं करोति। तत्र प्रत्यवायपरिहार एवं फल स्वीक्रियते, न तु स्वर्गः। तस्य मुमुक्षुभिरनभिलषितत्वात्। पापपरिहारश्च सर्वाभिलषितः। न च कश्चिज्जीवनपर्यन्तं सकलाङ्गोपेतं कर्म कर्तुं शक्नुयादिति कानिचिदङ्गानि त्यक्तुं शक्यन्ते। एवं यथाशक्तिन्यायो नित्येषु कर्मसु। निमित्तवशादेवात्र फलसाधनतावश्यम्भावात् यत् किञ्चिदङ्गोपेत-प्रधानानुष्ठानेनैव फलसिद्धिरिति तात्पर्यम्। अत एवोक्तं विपश्चिद्भिः—'अङ्गं हि नाम विधिसम्बन्धादुपादीयते, निमित्तानुरोधात् त्यज्यते वेति। काम्ये च निमित्ताभावात्र तथेति साङ्गानुष्ठितादेव प्रधानात् फलसम्पदिति सर्वाङ्गोपसंहारः सिद्ध्यति। एतत् प्रभेदत्रयं सामान्यविशेषोभयरूपतया श्रुतम्ः। संस्कारविशेषापेक्षितत्वेनाग्निहोत्रादिलक्षणेषु नित्यत्वेनोपदिष्टेषु शिष्टपरम्परातो बाह्यानामधिकाराभावेऽपि सत्यदानविशेषव्रतोपवासादिषु मानवमात्रमधिकत्य श्रुतेषु स्मृतेषु वाऽधिकाराभावेऽनर्थपरम्परा भूयसी प्रसज्येत। यद्यपि तथाविधबह्वनर्थानुबन्धिसमुद्रलङ्घनगुरुजायागमनामेध्य-प्रतिषिद्धगर्हितकर्माचरितॄणां सामान्यकाम्यधर्मानुष्ठानविरहे नास्ति कोऽपि दोषः। केवलं तेषां समीहितमेवापूर्वद्वारा न सिद्ध्येत्। नित्यनैमित्तिककर्माभावे तु तेषामकरणजन्यप्रत्यवायः प्रसज्येतैव। तत्करणे च न तथा। अतः पातित्येऽपि प्रायश्चित्तपुरःसराः पतितास्तत्संसर्गिणश्च सर्वदैव सत्यदानादिधर्मेषु नियुज्येरन्। यद्यपि तेऽन्धन्तमःप्रविष्टास्तथापि ततोऽपि भूयस्तमःप्रवेशो न तेषामुचितः। एवमेव तेऽग्रे धर्मानुरागिणो भवेयु र्न पुनरधर्ममाचरेयुरिति। अपि च—सत्याचार-व्रतोदीप्तभगवद्-भक्तिप्रधाने धर्मशास्त्रान्तर्गतनारदपाञ्चरात्रपाशुपतादिवामागमेतरतन्त्रप्रचोदिते वैष्णवादिमार्गे सर्वेषामेव विशेषतस्त्रयीभ्रष्टानामधिकारः प्रतिपादितो यः स

सामान्यधर्माधिकारितायामेव सिद्ध्यति, नान्यथा। तथा हि वर्तत एव धर्मज्ञानामृषीणां वचनम्—

'पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम्।
वेदभ्रष्टान् त्समुद्दिश्य कमलापतिरुक्तवान्।।
अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः।।
शापाद्वा गौतमादीनां पापाद् वा महतो नराः
ये गता वेदबाह्यत्वं ये च सङ्कीर्णयोनिजाः।
तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम्'।। इति।

उदाहृतं चैतच्छम्भुभट्टै र्विरोधाधिकरणे प्रभावल्याम्। उक्तेन चैतेन पौराणवचनेन पाञ्चरात्राद्यागमानां प्रामाण्यमधिकारिविशेषपरत्वेनैव स्वीकृतमस्ति, न तु वैदिकाधिकारविषयमिति न विस्मर्तव्यम्। तत्तल्लिङ्गवशेन पतितानामपि तन्त्रागमावबोधितवैष्णवादिमार्गेऽधिकार-निश्चयो भवति। तथा हि ब्रह्मपुराणे अगस्त्यं प्रति हयग्रीववचः—

'वर्णाश्रमविहीनानां पापिष्ठानां नृणामपि।
यद्रूपध्यानमार्गेण दुष्कृतं सुकृतायते'।। इति।

तथा च प्रायश्चित्तखण्डे बृहस्पतिः—

'कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा।
प्रायश्चित्तमिदं प्रोक्तं पराशक्तेः पदस्मृतिः'।। इति।

प्रपत्तिमार्गे भगवन्तं प्रति प्रपन्नानां पतिततयाऽऽत्मस्वीकरणमपि सामान्ये धर्मे तदधिकारमवबोधयति। श्रीगणेशसहस्रनामस्तवफलस्तुतौ क्वचिद् धर्मेऽधिकारः प्रतीयते शुभगतये। स्पष्टमेवोक्तं तत्र—

सकृत्पाठेन संसिद्धः स्त्रीशूद्रपतितैरपि।
सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये'।। इति।

न चैवं भक्तिप्रधानवैष्णवपाशुपतादिमार्गस्य पतितादिविषयत्वाद् वैदिकाविषयत्वमितिवाच्यम्। वेदैकगम्याया भक्तेः सर्वजनोपास्यत्वात्। अत एव तस्या धर्मत्वमेवाभिलषन्ति विपश्चितः। तस्या 'अपि वेदबोधितेष्टसाधनकत्वात्। कथं तस्या अवेदबोधितत्वमिति चेत्? श्रूयताम्।

मन्त्रवर्णादेव महन्नामसङ्कीर्तनस्य पापनाशकत्वं निश्चीयते। तथा हि मन्त्रवर्णाः—

**'न युष्मे वाजबन्धवे निनित्सुश्च न मर्त्यः अवद्यमधिदीधरत्'।।** इति।

हे वाजबन्धवः! अन्नदानेन सर्वबन्धवः। युस्मासु निन्दकोऽपि भवदनुसन्धानमात्रेण निष्कल्मषत्वाद् मर्त्यः पापं न धारयतीति मन्त्रार्थः। अत्र गम्यते निन्दन्नपि किं पुनः स्तुवन्निति। एवं भगवतो नामकीर्तनं सर्वपापनिरसनक्षमित्यर्थात् गम्यते।

अपि च—

**तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन।**
**अस्य जानन्तो नामचिद् विविक्तन विष्णोः सुमतिं भजामहे'।।**

अस्यार्थः—उ इति छन्दःपूरणाय। हे जानन्तः! तं देवमीश्वरं नारायणं पुरातनं सकलवेदप्रतिपाद्यं स्तुध्वम्। स्तोतार इति प्रत्ययविपरिणामः। यथाविदो यथाविदन्ति तथा स्तुध्वमिति। एवं सति जन्मना पिपर्तन पिपृत मुक्तिप्राप्त्या जन्मानि समापयत। विष्णो र्नाम सदा कीर्तयत (विविक्तन) सुमतिं भजामहे लकारव्यत्ययः। एवञ्च तत्त्वज्ञानमाशासाना कीर्तयतेति।

अत्र लिङ्गेन विधीयते। स्मृतिपुराणेषु महापातकिवृत्तान्तद्वाराऽयं विषयो बहुधा प्रपञ्चितः। तथा ह्यजामिलोपाख्याने श्रीमद्भागवते—

**'म्रियमाणो हरे र्नाम गृणन् पुत्रोपचारितम्।**
**अजामिलोऽप्यगाद् धाम किं पुनः श्रद्धया गृणन्'।।** इति।
**अजामिलोऽपि महापतितोऽपीति।**

सत्यदानादिधर्मवत् कतिपयव्रतोपवासानां नित्यत्वं काम्यत्वं च स्मृतम्। नित्यस्य च त्यागे दोषकीर्तनादवश्यं तेषां मानवमात्रकर्तव्यता सूच्यते। इत्थं तथाविधनित्यधर्मान्यथानुपपत्तिरूपार्थापत्त्या शिष्टबहिष्कृतानां पतितानां सत्यादिसामान्यधर्माधिकारोऽक्षुण्ण एवेति। प्रयोजनन्तु पूर्वोत्तरपक्षाभ्यामेव यथायथमुन्नेयम्।

**।। इति पातित्यपेटिकायां तृतीयं पतितानां सामान्यधर्माधिकारव्यवस्थापनाधिकरणम् ।। ३ ।।**

## अथ चतुर्थं कृत्वाचिन्तायां पतितानामावृत्त्या पातित्यप्रयोजककर्माननुष्ठानाधिकरणम्

पतिततत्संसर्गिणां सत्यादिसामान्यधर्माभिसम्बन्धो नास्तीत्यस्मिन् पक्षे पुन र्विचार्यते—फलाभावादकृतप्रायश्चित्ताः पूर्वोक्ताः पतिताः पुनः समुद्रलङ्घनसुरापानग्राम्यकुक्कुटतदण्डभक्षणासवर्णजातीयकन्योद्वाहविध-वोद्वाहप्रभृतीनि प्रतिषिद्धप्रातित्यप्रयोजकात्यन्तविगर्हितकर्माण्याचरेयुरुत नेति। एवं सन्देहे जायमाने तावदयं पूर्वपक्षः—

सति धर्माधिकारे च त्यागो गर्हितकर्मणाम्।
युज्यते पतितानां हि श्रेयोलोपोऽन्यथा भवेत्।।१।।
सर्वथा धर्मकार्येषु यद्यनर्हा भवन्ति ते।
अतिकुत्सितकृत्यानां का हानिः पतने पुनः।।२।।
कज्जलेन मुखं यस्य कालकूटायितं किल।
पुनःकज्जललेपेन काष्र्ण्यं तत्राधिकं किमु।।३।।
अतितुच्छफलार्थं यत् तेषां कृत्यं प्रजायते।
तत्फलावाप्तये पौनःपुन्येन तत् सदा भवेत्।।४।।
दूरे धर्मफलं येषां लोपादधिकृते र्यदा।
कुत्सितकर्मणा तुच्छं प्राप्नुवन्तु तथैव ते।।५।।
इत्येवं पतने प्राप्ते पतितानां पुनः पुनः।
सम्यक् सिद्धान्तपक्षोऽत्र न्याययुक्त्याऽभिधीयते।।६।।

### सिद्धान्तः

भवदुक्तिपक्षे वेदो धर्माधर्मप्रदर्शकः।
बाध्येतैव ततस्तैस्तु नैव कार्यं पुनः पुनः।।७।।
शिष्टै र्विगर्हितं कर्म तुच्छलाभैकहेतुकम्।
यथा हि श्रवणादीनामभ्यासादात्मनिश्चयः।।८।।
प्रोक्तो वैयासकौ सूत्रे, फलभूमाभिधित्सया।
यथा वा दर्शपूर्णमासादेः प्रयोगावृत्तिरिष्यते।।९।।

**एवञ्च कुत्सितं कर्म क्रियमाणं पुनः पुनः।**
**महानिष्टफलायैव यावत्कल्पं सदा भवेत्।।१०।।**

सत्यादिसामान्यधर्माधिकारशून्यत्वेऽपि पतितानां पुनः पुनः पातित्य-कारकं फल्गुफलं कर्म न कार्यम्। वेदबाधप्रसङ्गादेवैवं निश्चयः। 'असतो मा सद् गमय, तमसो मा ज्योति र्गमय' इत्येवमादीनि वेदवचनानि कुप्येरन्। मानवानामेवायं भारो यत्ते जीवनेऽज्ञानप्रयुक्त-परिवारसम्वर्धनोन्मुखा अपि निःश्रेयसायापि किमपि प्रयतेरन्निति। अन्यथाचरणे निन्दापि श्रूयते वाजसनेयिशाखायाम्—

**'असूर्या नाम ते लोका अन्धेन तमसावृताः।**
**तांस्तु प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'।। इति।**

धर्माचरणविरहेऽपि दुष्पारतमोवर्त्मावरोधो विधातव्य एव निरयफलककुकृत्यनिचयाद् निवर्तमानैः। प्रबलसंस्कारवशादनिच्छद्भिरपि यानि प्रतिषिद्धानि कर्माणि क्रियमाणानि भवन्ति तानि भगवद्नामोच्चारणादिना क्षयमुपयान्ति। अजामिलोपाख्यानेन निश्चीयत एवम्। शक्यते यस्माद् निवर्तितुं ततो निवर्तितव्यम्। पुनः पुनः कपूयाचरणे दोषबाहुल्यं नास्तीति न भ्रमितव्यम्। आवृत्त्या फलाधिक्यश्रवणात्। 'आवृत्तिरसकृदुपदेशादि' त्यनेन भगवान् वादरायण आत्मनिश्चयदार्ढ्याय श्रवणादीनामावृत्तिमुपदिशति। दर्शपूर्णमासा-देरावृत्तिरपि श्रूयते फलभूमप्रदर्शनाय। तथा हि—'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इत्यत्र दर्शपूर्णमासयोरेवावृत्तिरूपो गुणो विधीयते न कर्मान्तरविधिरिति निरूपितं मीमांसायां द्वितीये (अ. २, पा. ३, अधि. ५)। दक्षस्येमे दाक्षा ऋत्विजस्तत्कर्तृकमयनं प्रयोगावृत्ति र्यस्य यज्ञस्येति दाक्षायणपदस्य व्युत्पत्तिरप्यावृत्तिपरतयैवापादिता। कियत्या-वृत्तिरित्यपेक्षायां 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेतेतिविशेषविधानाद् द्विरावृत्तिरेव पञ्चदशवर्षपर्यन्तं भवति। इत्थमेवावृत्त्या क्रियमाणं कुत्सितं कर्म महानिष्टफलकमेव निःश्रेयसविरोधि स्यादेवेति पुनःपतनाद् निवर्तितव्यमेवेति। प्रयोजन न्तु धर्मनिरपेक्षविहिपादिसङ्कटने समावेशः पूर्वपक्षे, सिद्धान्ते नेति।

**।।इति पात्यिपेटिकायां कृत्वाचिन्तायां चतुर्थं पतितानामावृत्त्या पातित्यप्रयोजककर्माननुष्ठानाधिकरणम्।।४।।**

## अथ पञ्चमं त्रयीमार्गात्यन्तभ्रष्टानां बौद्धादीनां वैष्णवादिमार्गव्यवस्थापनाधिकरणम्

पतितानां सत्यादिधर्माधिकारपक्षे येऽत्यन्तत्रयीमार्गभ्रष्टाः पुरुषकल्पितासद्मार्गश्रद्धासंपृक्ता बुद्धार्हतेसामूसामोहम्मदानुयायिन स्तेऽपि सत्याद्युपलक्षितवैष्णवादिमार्गं गृह्णीयुरुत नेति विचार्यते। ननु सिद्धमेतत् पूर्वाधिकरणेनैवेति कथं विचारावसरः? अस्त्यवसरो विचारस्य। पूर्वन्तावत् त्रयीमार्गनिष्ठानामेव कपूयाचरणात् शिष्टबहिष्कृतानां चतुर्दशविद्यास्वास्थावतां मार्गविशेषः प्रदर्शितः। इदानीन्तु सर्वथा त्रयीभ्रष्टानां किञ्चिदकरणीयमपि धर्मबुद्ध्या विदधतां यवनम्लेच्छादीनामपि व्यवस्था प्रतिपाद्यते। किन्तावत् प्राप्तम्? नास्ति वैष्णवादिमार्गेऽपि तेषामधिकार इति। कुतः? श्रूयताम्!

त्रयीमार्गविरुद्धे हि येषामत्यादरः स्फुटः।
सर्वाचारपरिभ्रष्टा विलोक्यन्ते य एव हि।।१।।

एकादश्यां महापुण्यतिथौ मांसादनन्तथा।
अन्यभुक्तपरित्यक्तयोषिताञ्च परिग्रहः।।२।।

धर्मकञ्चुकमाश्रित्य क्षपणकादिभि गृहे।
तरुणीयोनिपूजा च तथा बौद्धैरपि स्वयम्।।३।।

क्रियमाणा महापूजा महापाखण्डसंश्रया।
अन्येऽपि च दुराचारा धर्मत्वेन व्यवस्थिताः।।४।।

येषां परम्पराप्राप्ताः कथन्तेषां व्यवस्थितिः।
वैष्णवादिमहामार्गे सम्भवेज्जगतीतले।।५।।

सर्वविधदुराचारमग्ना अपि तथा हि ते।
ईशभक्तिं प्रकुर्वन्ति स्वस्वग्रन्थानुसारतः।।६।।

**अतो विशेषतस्तेषां कृत्यभावात् तथाऽरुचेः।**
**महापुरुषसङ्क्षुण्णमार्गो नेति प्रतीयते।।७।।**

त्रयीमार्गविरुद्धानां सकलशिष्टाचारपरिपन्थिनां येषां मोहम्मदमत-गामिनां महापुण्यैकादश्यामेव प्रत्युपस्थितायां बकरीदादितिथौ नैकविध-पशुच्छेदनं तन्मांसभक्षणञ्च तथेसाद्यनुयायिनामपि परभुक्तमुक्तमहिलापरिग्रहो वैधत्वेन स्वीक्रियमाणः परिदृश्यते, तथैव च येषां दिगम्बरक्षपणकपदवाच्यानां बौद्धादिभिक्षूणां धर्मबुद्ध्यैव तरुण्या योनिपूजा स्वकपोलकल्पिताऽन्या च पाखण्डाश्रया महापूजा तथा वेदादिशास्त्रतन्मार्गानुयायिप्रदूषणाख्यादयो बहवो दुराचारा धर्मत्वेन व्यवस्थिताः समादृताश्च भवन्ति तेषां परमभागवतसकल-लोकाभ्यर्हणीयमहापुरुषक्षुण्णे वैष्णवादिमार्गे व्यवस्थाऽ शक्यसम्पादनैव वाममार्गे दक्षिणमार्गव्यवस्थेव। यद्यपि वामागमोऽस्माकं तन्त्रगत एव विलोक्यमानो भवति तथापि वेदादिशिष्टाचारविरुद्धत्वात् तस्य धर्मे प्रामाण्यमस्वीकृतमेव विरोधाधिकरणन्यायेन। केवलं त्रयीपरिभ्रष्टानां सुगतादिकुत्सितवर्त्मानुसारिणामेव धीविमोहाय तस्योपयोग इति तत्तदागमग्रन्थपर्यालोचनया निश्चीयते। उक्तमेतत् सर्वं श्रीपरमहंस-परिव्राजकश्रीराघवानन्दतीर्थयोगीन्द्रशिष्यैः श्रीरामानन्दै स्त्रिपुरोपनिषद्-भाष्ये—

'दिगम्बरक्षपणकादयस्तु स्त्रियमुत्तानां कृत्वा ऊर्ध्वत्रिकोणं पूजयन्ति इति रहस्यम्। यद्यप्यत्र बहु वक्तव्यमस्ति, तत्त्ववैदिकमार्गत्वात् स्मरणार्हमपि न भवति'। इति।

सुभगोदये कौलशिक्षापटलेऽपि—

**'बाह्यपूजारताः केचित् पाखण्डा वेदनिन्दकाः।**
**कौलाः कापालिका नूनमागमैरविधानतः।।**
**निषिद्धाचरणात् पातस्तेषामिति हि मे मतिः'।।** इति।

तथा सनत्कुमारसंहितायामपि—

**'बाह्यपूजा न कर्तव्या कर्तव्या बाह्यजातिभिः।**
**सा क्षुद्रफलदा नृणामैहिकार्थैकसाधनात्।।**

बाह्यपूजारताः कौलाः क्षपणाश्च कपालिनः।
दिगम्बरा ऐतिहासा नामकास्तन्त्रवादिनः'।। इति।

क्षपणकमार्गवर्तमानतरुणीयोनिपूजाप्रभावित एव पूर्वं 'रजनीश' इति पश्चात् 'ओशो' इत्यभिख्यया कुख्यातः कश्चित् क्षपणकमार्गानुयायी प्रत्यक्षमेव कदाचारं लोके व्यवास्थापयदिति न विस्मर्तव्यम्।

सर्वथा विगर्हितमार्गावलम्बिनोऽप्येते निजग्रन्थावगम्यवर्त्म-श्रद्धातिशया प्रभुभक्तिमपि विदधते। तथा हि—बौद्धानां चैत्यवन्दनं निजमन्दिरस्थापितबुद्धपूजा च, जैनवर्त्मगामिनामतिविशाल-मन्दिरस्थापितनग्नपुरुषार्चा, मूसलमानानां मस्जिदे सामूहिकतया नमाजपाठो गलगर्जनप्रणाडिकया, ईसाद्यनुगामिनामपि तथैव विशिष्टनिकेतने प्रार्थना च। सर्वा चेयं भक्तिविधैव प्रकारान्तरेण चकास्ति। वैष्णवादिमार्गोऽपि भगवद्भक्तिमार्ग एव। एवमेतेषां विशेषतो वैष्णवादिमार्गे कार्याभावात् श्रद्धाभावाच्च नाधिकार इति प्राप्ते—

पलाण्डुलशुनोपेताभक्ष्यमांसनिषेवणात्।
अन्यभुक्तपरित्यक्तनारीणाञ्च परिग्रहात्।।८।।

तरुणीयोनिपूजातस्तथा चान्यकुकृत्यतः।
पातित्यं जायमानं हि भवेच्छ्रेयोविघातकम्।।९।।

सर्वं यदुक्तं भवता तथ्यमेवेति तत्स्फुटम्।
त्रयीमार्गविरुद्धानां तमिस्त्राततिरतःश्रुता।।१०।।

एतेषान्तु तथापीह समुद्धारः श्रुतीरतः।
गवेषणीयो विद्वद्भि र्लोकानुग्रहकाङ्क्षिभिः।।११।।

श्रीमन्नारायणप्रोक्तवैष्णवमार्गतः क्वचित्।
नैव तेषां भवेच्छ्रेयो नित्यं पाखण्डशालिनाम्।।१२।।

सत्तूक्तं तैरपि प्रायः स्वस्वमार्गानुसारतः।
ईशभक्ति र्व्रतादिश्च श्रद्धयैव वितन्यते।।१३।।

तत्र ब्रूमः कुबुद्धीनां सद्वर्त्मविमुखात्मनाम्।

**सर्वशास्त्रविरुद्धत्वात् न सा भक्तिः कथञ्चन।।१४।।**

**नित्यं कुकर्मनिष्ठानामीशभक्ति र्न शस्यते।**

**यतो हि धर्मसंपृक्ता भक्ति र्भक्ति र्महात्मनाम्।।१५।।**

**यानि यानीशनामानि शास्त्रेषु कथितानि च।**

**तेषामालम्बनेनैव भवेच्छ्रेयो न चान्यथा।।१६।।**

**यन्नामोच्चारयन्त्यद्धा म्लेच्छायाः श्रुतिनिन्दकाः।**

**कथन्तेषां समुद्धारस्तदालम्बनजो भवेत्?।।१७।।**

**तस्माद् नारायणप्रोक्ते वैष्णवे वर्त्मनि ध्रुवम्।**

**धर्मभ्रष्टा विशेयुस्ते सद्गते र्लिप्सया पुनः।।१८।।**

विधिप्रतिषेधात्मकस्य शास्त्रस्य मनुष्यमात्रविषयत्वाद् धर्माधर्म-बहिष्कृताः पशुपिशाचप्रभृतय एवेति प्रतिपादितं जैमिनीये षष्ठे। तदेव तु—

**'यतो विधिनिषेधे तु मनुष्याणामधिक्रिया।**

**अतः पशुपिशाचाद्या धर्माधर्मबहिष्कृताः'।।**

इति पद्मपुराणीयं वचनमनुवदति। नित्यधर्मत्यागात् पुरुषकपोल-कल्पितवर्त्मानुसरणादधर्मसंसेवनाच्च प्रच्यवेतैव जन्तुरभ्युदयनिः-श्रेयसाभ्याम्। वैष्णवादिमार्गश्च त्रयीमूलकत्वात् स्मृत्यधिकरणन्यायेन धर्म एवेति नास्ति विप्रतिपत्तिः। अत एव महानर्थभूतपाखण्डानर्थप्रधानेभ्यो बुद्धादिप्रचोदितमार्गेभ्यः पृथग्भूय ग्राह्य एव वैष्णवादिमार्गः सर्वैरेव त्रयीविरुद्धै र्यथाविधानं तीर्थस्नानव्रतादिपुरःसरन्तथा श्रुतिसिद्धः सदाचारोऽपि क्रमशः शिक्षणीय इति। अस्योपोद्बलका नैके न्यायास्तन्मूलकानि वचांसि च भवन्ति। नामापि भगवतः शास्त्रप्रतिपादितमेव ग्राह्यम्। गृहीतवैष्णवादिमार्गस्य तदेव तु प्रायश्चितं गङ्गास्नानं वा। तथा च योगियाज्ञवल्क्यः—

**'न तावत् पापमस्तीह यन्नाम्ना न हृतं हरेः।**

**अतिरेकभयादाहुः प्रायश्चित्तान्तरं वृथा'।। इति।**

महामुनिश्च्यवनोऽप्याह भार्गवोत्तमः—

**'श्रुतिस्मृतिपुराणेषु रामनाम समीरितम्।**
**सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम्'।। इति।**

श्रीमद्विष्णुपुराणेऽपि—

**'कलिकल्मषमत्युग्रनरकादिप्रदं नृणाम्।**
**प्रयाति विलयं सद्यः सकृद् यत्रानुसंस्मृते।।**
**स सर्वः सर्ववित् सर्वस्वरूपो रूपवर्जितः।**
**सर्वभूतश्च सर्वात्मा कीर्त्यतां भगवान् हरिः'।। इति।**

न चैतदर्थवादमात्रमिति वाच्यम्। एतस्य सर्वस्यैवार्थवादत्वप्रतिषेधात्। तथा च पराशरसंहितायाम्—

**अर्थवादं हरे र्नाम्नि सम्भावयति यो जनः।**
**स पापिष्ठो मनुष्याणां निरये पतति स्फुटम्।। इति।**

अर्थवादत्वेऽपि भगवन्नामसङ्कीर्तनस्य स्तुत्यत्वाच्छ्रेयःपरता न हीयत इत्यलं पल्लवितेन। गङ्गास्नानप्रवित्रता चोक्ता लैङ्गे—

**'ब्रह्महा गुरुहा गोघ्नः स्वर्णहृद् गुरुतल्पगः।**
**गङ्गाम्भसा तु पूयन्ते नात्र कार्या विचारणा'।। इति।**

निष्फलानर्थफलानुष्ठानापेक्षया सफलाभ्युदयनिःश्रेयसफलानुष्ठानं गरीय इति लोकन्यायः। एवं त्रयीभ्रष्टै वैष्णवादिमहामार्गप्रवेशः कार्य एव श्रेयोलिप्सयेति सिद्धं भवति। प्रयोजनन्तु सकलमानवानां पारस्परिकप्रियताविरहः पूर्वपक्षे सिद्धान्ते तु स नेति। अन्यान्यपि प्रयोजनानि सुधीभिरुह्यानि।

**।। इति पञ्चमं पातित्यपेटिकायामत्यन्तत्रयीमार्गभ्रष्टपुरुषकल्पितासद्मार्गसंपृक्तानां बुद्धार्हतादिमतानुयायिनामपि वैष्णवादिमार्गव्यवस्थापनाधिकारणम्।।५।।**

## अथ षष्ठं कृत्वाचिन्तायां त्रयीबाह्यानां वैष्णवादिमार्गाभावपक्षे महापातकादिविगर्हितकर्मवर्जनपुरःसरमेव निजमार्गतो भक्त्युनुष्ठानाधिकरणम्

त्रयीमार्गात्यन्तभ्रष्टानां यदा नास्ति वैष्णवादिमार्ग स्तदा तैः स्वस्वपरम्परागृहीतेशभक्तिरेव विधातव्येति सिद्धं भवति। तत्र श्रुतिप्रतिषिद्धशिष्टविगर्हितकुत्सितव्यवहारैः सहैव सा विधातव्या उत नेति विचार्यते। श्रुतिविप्रतिषिद्धतदीयसमाचाराः प्राक् सङ्कलिताः। तत्र स्वसम्प्रदाये लोभादिना त्रयीबद्धादराणां निपातनं श्रुतितद्बोधितमार्गनिन्दा च गृह्यते। किन्तावत् प्राप्तम्? शिष्टविगर्हितप्रतिषिद्धकुत्सितव्यवहारैः सहैव विधातव्येति। कुतः? उच्यते—

अज्ञानप्रयुक्त्या हि निन्द्यकर्मक्रिया नृणाम्।
सा च सद्धर्मशिक्षादिसमारोपाद् दृढा भवेत्।।१।।

अधर्मे धर्मबुद्धीनां ततो व्यावर्तनेन वै
व्यावृत्ता च भवेद् बुद्धिः स्वीयभक्तिप्रकारतः।।२।।

उपासनास्थलीं गत्वा समवेता प्रभुं सदा।
आर्तभावेन सततं प्रार्थयन्ते पुनः पुनः।।३।।

तत्प्रार्थनाप्रकाराणां देशिका ये व्यवस्थिताः।
तेषां प्रचोदितेऽधर्मे श्रद्धाऽभावः प्रभावयेत्।।४।।

भक्तेः प्रकारतां तेषामत एव सदा च तैः।
निन्द्यैरधर्मसम्पृक्तैः कृत्यै र्भक्ति र्विधीयताम्।।५।।

अधर्मे धर्मबुद्धिस्तामसी बुद्धिरित्याह भगवान् वासुदेवः—

**अधर्मं धर्ममिति या मन्यते तमसावृता।**

**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी।।** इति।

(गीता १८.३२)

तया च विपरीतार्थप्राप्तिरिति शास्त्रनिश्चयः। तामसा अपि जना भगवति भक्तिं वितन्वत इति लोकव्यवहाराद् निश्चीयते। यद्यपि मौहम्मदान् विहाय बौद्धप्रभृतीसावसानाः सर्वेऽपि पुरुषकल्पित-वर्त्मगामिनो मूढा निजोपास्तिस्थलविशेषेषु स्वसम्प्रदायपुरुषाकृतिमेव भजन्ते। मौहम्मदास्तु तानीशव्यतिरिक्तान् मन्वाना इन्द्रियपथातिरेकिणमेव खुदेलाहीपदवाच्यं सर्गावसाने शुभाशुभफलप्रदातारमीशं भजन्ते। यद्यपि त आकृतिं न समर्थयन्ते तथाप्याकृतिरायात्येव भजनान्यथानुपपत्त्यैव। सर्वोऽप्ययमुपासनप्रकारः शास्त्रविरुद्धत्वान्न धर्मताकोटिमधिरोहति तथापि स निष्प्रयोजन इति न मन्तव्यम्। तस्य ध्यानाद्युपायेनान्तः-करणशुद्धावुपयोगात्। वेदान्तिनोऽप्यत्रानुकूलाः सन्ति—

**'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।**

**जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्'।।** इति।

(गीता ३.२६)

इतिभगवद्वचनमुदाहरन्तः। अन्यत्राप्याह भगवान् स एव—

**'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।**

**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्।।**

**स तया श्रद्धया युक्तस्तस्याराधनमीहते।**

**लभते च ततः कामान् मयैव विहितान् हि तान्'।।** इति।

(गीता ७.२१-२२)

त्रयीमार्गविरुद्धैरनुष्ठीयमानो भक्तिप्रकारः पूर्वोक्तगर्हितकर्मभिः सममेव तिष्ठति। तेषु कर्मस्वश्रद्धायां जायमानायां भक्तिप्रकारोऽप्यश्रद्धा-विषयतामापद्येत। नैतद् युज्यते। अतः शिष्टविगर्हितकृत्यैः साकमेव तैरुपासनप्रकारः पुरुषकपोलकल्पितोऽप्याश्रीयतामिति प्राप्ते—

ब्रूमः

अज्ञानस्य प्रयुक्त्या वै यदि निन्द्यक्रिया नृणाम्।
सति ज्ञानोदये तेषां तत्त्यागो न्यायतो भवेत्।।६।।

यत्कृत्यैश्च त्रयीमार्गो मर्यादा लौकिकी तथा।
क्षुभ्येते चेत् ततो लोके श्रेयस्तत्त्यागतो भृशम्।।७।।

श्रेयोऽर्थकर्मणेऽपीह स्वीकारो निन्द्यकर्मणाम्।
गर्हितो जायते नूनं निष्फलाय च किं पुनः।।८।।

मा भूत् पाखण्डिनां चैत्ये मस्जिदे गिरिजागृहे।
प्रार्थना वेदबाह्यत्वात् निष्फलाऽनर्थचुम्बिता।।९।।

यदि तत्करणे तेषां पातकेषु रति र्भवेत्।
कुमारीपूजनादौ वा तद्भोगेषु रति र्यथा।।१०।।

महापातककर्माणि वर्जयित्वा पुनः पुनः।
कुर्युस्ते निजपद्धत्या कर्माणीहेति गम्यते।।११।।

सर्वत्र निन्द्यकर्मकरणेऽज्ञानमेव हेतु र्भवति। यद्यपि ज्ञानाज्ञानोभयप्रयुक्तप्रायश्चित्तसमाम्नानदर्शनाद् निन्द्यं कर्म ज्ञानतोऽपि भवति तथापि कामक्रोधासूयामात्सर्यविचिकित्साप्रभृतीनां विकाराणामज्ञानविवर्तत्वात् सर्वं निन्द्यं कर्म अज्ञानप्रयुक्तमेवेति स्वीक्रियते। अत एवाप्तादिमाध्यमेन शास्त्रीयज्ञानोदये निन्द्यकर्मत्याग एव न्यायतः प्राप्तः। त्रयीमार्गविरुद्धाचरणबद्धादराणां बौद्धादीनां कृत्यै र्यदि लौकिकमर्यादाक्षोभप्रसङ्गस्तदा तत्त्याग एव श्रेयान् सम्पद्यते। अत एवानुपेतबालकृतपापप्रायश्चित्तं तद्गुर्वादिभि र्विधीयते। यथोक्तम्—

'अनुपेतस्तु यो बालो मद्यं मोहात् पिबेद् यदि।
कृच्छ्रत्रयं गुरुः कुर्यात् माता भ्राता तथा पिता'।। इति।

एतेनैव न्यायेन त्रयीमार्गविरुद्धबौद्धयवनम्लेच्छादिकृतनिन्द्यकर्मणां प्रायश्चित्तं शिष्टै र्विधातव्यमेव भवति वसुन्धरोपप्लवनिरासार्थम्। अत एव

विश्वकल्याणायापि शिष्टानां कर्माणि भवन्ति। अपि च-धर्मबुद्ध्या ते यत्कृत्यं कुर्वन्ति तेन तेषामनिष्टसम्प्राप्तिः स्मर्यते—

**'दूषका धर्मशास्त्राणां हेतुवादकुतूहलाः।**

**एते विहङ्गमे घोरे पच्यन्ते पापकारिणः'।।** इति।

**विमुखे पतिते घोरे मर्यादां यश्च लङ्घति।**

**शाखामृगघ्नो गोघ्नश्च कृमिभक्ष्यं व्रजन्ति ते।।** इति च।

एवञ्च सर्वथा शास्त्रविर्हितकर्माणि सर्वैरेव मानवैः परिहर्तव्यान्येव। यद्येतद्निन्द्यकर्मजातं विना पाखण्डिनां प्रार्थना न सिद्ध्येत्तर्हि मा भूत् सा चैत्यादिषु। निजपद्धत्यापि तै र्महापातककर्मवर्जनपुरःसरमेव प्रार्थना-दीनसेवाप्रभृतीनि कर्माणि कर्तव्यानीति सिद्धम्।

प्रयोजनन्तु निन्द्यकर्मकरणे प्रायश्चित्ताभावः पूर्वपक्षे सिद्धान्ते तु प्रायश्चित्तसिद्धिरिति पूर्वोत्तरपक्षाभ्यामेव सुस्पष्टम्।

**।। इति पातित्यपेटिकायां कृत्वाचिन्तायां षष्ठं त्रयीबाह्यानां वैष्णवादिमार्गाभावपक्षे महापातकादिविगर्हितकर्मवर्जनपुरःसरमेव निजमार्गतो भक्त्युनुष्ठानाधिकारणम् ।।६।।**

●

# अथ सप्तमं म्लेच्छादीनां शुद्धचरितैरेव वैष्णवादिदीक्षाग्रहणाधिकरण्

त्रयीमार्गात्यन्तपरिभ्रष्टानां वैष्णवादिमहामार्गोऽस्तीति पक्षे तेषां वैष्णव्यादिदीक्षा समुद्रलङ्घनविधायिभि वैंष्णवादिभि र्विधातव्या न वेति विचार्यते। कुतः सन्देहः? शिष्टैरेतेषां परिहरणीयतायाः शास्त्रबोधितत्वात् परिशेषात् समुद्रलङ्घिभिरेव कृतप्रायश्चित्तैरपि लौकिकाशुद्धिसम्पृक्तै र्दीक्षा विधातव्येति प्राप्यते, तथा च वैष्णवादिष्वपि धर्मज्ञसमयोल्लङ्घने निन्द्यकर्मकरणे च त्यागविधानाद् यथाकथञ्चिद् विशुद्धाचरितैरेव दीक्षेत्यपि गम्यते। एवञ्च सन्देहे जायमानेऽवकीर्णिप्रभृतिसमुद्रलङ्घिभिरेव दीक्षा तेषां विधातव्या। कुतः?

**वेदोदितसदाचारबद्धादरमनीषिभिः।**
**त्यज्यन्ते पतिताः सर्वे त्रयीमार्गस्थिता अपि।।१।।**
**तन्मार्गाद् ये बहिर्भूता निन्दिता गर्ह्यकर्मभिः।**
**दीक्षणीयाः कथं सद्भि वैंष्णवे दिव्यवर्त्मनि।।२।।**
**म्लेच्छाद्यास्ते, ततस्तेषां दीक्षा समयलङ्घिभिः।**
**पतितै वैंष्णवैरर्हा न तु शिष्टैः कदाचन।।३।।**
**सत्येवं पतितानां वै पतितैरेव सङ्गतौ।**
**सर्वतः शुद्धभावानां धर्मो निर्बाधमिन्दति।।४।।**

पतितसंसर्गस्य सद्यःपातहेतुत्वात् त्रयीमार्गबद्धादरा वैष्णवा अपि तं परित्यजन्ति। सद्यःपातहेतुत्वञ्चाह प्रायश्चित्तमयूखे देवलः—

**'याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्।**
**कृत्वा सद्यः पतन्त्येव पतितेन न संशयः।।**

सुमन्तुविष्णुवचनैरपि मुखसम्बन्ध्युपदेशद्वारा सद्यःपातित्यमवगम्यते। तथा हि विष्णुवचः—

**'यौनस्रौवमुख्यैस्तु सम्बन्धैः सद्य एव'।।** इति।

सुमन्तुरपि तथैवाह—

**'यः पतितैः सह यौनमुख्यस्रौवाणामन्यतमं सम्बन्धं कुर्यात् तस्याप्येतदेव प्रायश्चित्तमि'ति।**

एवञ्चापतितवैष्णवैरपि न म्लेच्छादीनां दीक्षा विधातव्येति निश्चीयते। परिशेषोत् पतितैरेव तेषां दीक्षा प्राप्यते। तथा चापतित-वैष्णवादीनां धर्मो निर्बाधं समृद्धो भविष्यति। इत्येवं प्राप्ते ब्रूमः—

**दीक्षा हि स्वात्मसंस्कारः प्रपत्तावुपयोक्ष्यते।**
**पतितद्वारतस्तस्याः संस्कारत्वं कथं भवेत्।।५।।**
**असंस्कृतात्मनाञ्चैवं वैष्णवत्वं न युज्यते।**
**एतस्मात् कारणाद् नूनं विशुद्धाचरितैः शुभैः।।६।।**
**दीक्षां प्राप्य च पाश्चात्यै र्भक्तिमार्गः प्रपद्यताम्।**
**यत्तूक्तं वैष्णवश्रेष्ठाः पतितान् सकलानपि।।७।।**
**दूरात् परिहरन्तीति श्रूयतामत्र चोत्तरम्।**
**यथा हि ब्राह्मणं स्वाग्रे कृत्वा श्रोतुं व्यवस्थिताः।।८।।**
**शूद्रा धर्मं भवन्त्येव तथा व्यवहिताः सदा।**
**प्राप्नुवन्तु सदा दीक्षां विशुद्धैरेव धर्मतः।।९।।**
**इत्थमेव निराबाधं दिक्षु सर्वासु विस्फुरन्।**
**वर्धतां वैष्णवाचारः परमेशप्रचोदितः।।१०।।**

आत्मनः संस्काराय विहिता दीक्षा न विधानमतिक्रमितुमर्हति। पतितद्वारा सम्पाद्यमाना सा शास्त्रीयविधानमतिक्रामेत्। न तदा सा दीक्षैव भवेत्। वैष्णवैरेव वैष्णवदीक्षा सम्पाद्येति न्यायतः प्राप्तम्। वैष्णवेष्वपि समयोल्लङ्घनाकार्यकरणाभ्यां पातित्यं सञ्जायत इति तदीयशास्त्रा-देवावगम्यते। यथोक्तं श्रीमद्भगवद्रामानन्दाचार्यै वैष्णवमताब्जभास्करे—

**'प्रच्युतो नैष्ठिकाद् धर्मादात्महापि प्रकीर्तितः।**
**मठाध्यक्षत्वदीक्षादौ बहिष्कार्यः स यत्नतः।।**
**व्यासेन ब्रह्मविद्यातो बहिष्कारोऽस्य सूचितः।**
**शिष्टा यज्ञादिकार्येषु वर्जयन्ति तथाविधम्।।**
**विरक्तै वैष्णवैस्तस्मादारुढपतितो न हि।**
**व्यवहारेषु योक्तव्यस्तत्संसर्गोऽपि पापकृत्।। इति। (५.७.८.९)**

एतेनेदमेव निश्चीयते यद् गृहीतवैष्णवमार्गस्य समुद्रलङ्घनादिना पातित्यमुपेतस्य यस्य संसर्गोऽपि महानरकसम्पातहेतुः पापकृद् भवति स कथमिव दीक्षापुरःसरं त्रयीमार्गात्यन्तस्खलितानां बौद्धयवनादिजनानामपि मन्त्रोपदेष्टा स्यात्। दीक्षामन्त्रोपदेशादौ विशुद्धत्वमाचारादिभिरपेक्ष्यते। यथोक्तं तैरेवाचार्यैः—

**'यतेन्द्रियः शुचिः शुद्धवेशधृक् सुकुलोद्भवः।**
**सदाचारपरो नम्रः शास्त्रज्ञो देशनापटुः।।**
**विरक्तधर्मनिरतो ध्यानाभ्यासी सुबुद्धिमान्।**
**निग्रहेऽनुग्रहे चैव समर्थो देशिको मतः।।**
**हीनाङ्गो ह्यधिकाङ्गश्च कपटी कृष्णदन्तवान्।**
**नेत्ररोगी च कुष्ठी च वावदूकश्च वामनः।।**
**व्यसनी बहुनिद्रश्च कुनखी बहुभोजनः।**
**नेदृशो देशिको योग्यो मुमुक्षो र्मोक्षसाधाने।।** इति।

(वैष्णवमताब्जभास्करे, ४/३-६)

एवञ्च विशुद्धचरितैः स्वधर्मानतिक्रमशुद्धैरेव वैष्णवैस्तेषां दीक्षेति स्थितम्। यत्तु परिहरणीयतोक्ता सा च साक्षाद्दीक्षापरेति ध्येयम्। श्रावयेत् चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत इत्यनुशासनात् ब्राह्मणव्यवहिततया यथा पुराणादिश्रवणे शूद्रानामधिकारस्तद्वदेव ते ब्राह्मणमग्रतः कृत्वा दीक्षां ग्रहीतुमर्हन्ति। एवञ्च न कोऽपि दोषलेशोऽपि प्रसज्येत। इत्थमेव वैष्णवाचारस्य सर्वदिक्प्रसाराभिप्राय आचार्याणाम्। यथोक्तम्—

**'सर्वदेशदिशाकालेष्वव्याहतपराक्रमा।**
**श्रीरामानुजाचार्याज्ञा वर्धतामभिवर्धताम्'।।** इति।

एतद्वचनेन न कथञ्चित् समुद्रलङ्घनं गम्यत इति सुधियो विभावयन्तु। प्रयोजनन्तु पतितलब्धदीक्षाणां म्लेच्छादीनां प्रपत्तिमार्गेण समीहितसिद्धिः पूर्वपक्षे सिद्धान्ते सा नेति।

**।।इतिपातित्यपेटिकायां सप्तमं म्लेच्छादीनां शुद्धचरितैरेव वैष्णवादिदीक्षाग्रहणाधिकरणम्।।७।।**

## अथाष्टमं स्वीकृतवैष्णवधर्माणां म्लेच्छयवनादीनां स्ववर्ग एव विवाहादिव्यवहाराधिकरणम्

अतः परं विचार्यते—परिगृहीतवैष्णवादिमहामार्गाणां त्रय्या अत्यन्त-परिभ्रष्टानां बौद्धयवनादीनां विवाहादिव्यवहारो वैष्णवत्वाविशेषात् स्ववर्गातिरिक्तेष्वपि भवेत् उत स्ववर्ग एव पूर्वसिद्ध इति। किन्तावत् प्राप्तम्? स्ववर्गातिरिक्तेष्वपीति। कुतः?—

**दीक्षिता वैष्णवे धर्मे नारायणसुसङ्गताः।**
**भेदभावात् पृथग्भूताः परमां समतां गताः।।१।।**
**पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतः सदा।**
**व्यवहारं सदा कुर्युः सर्वं वैवाहिकादिकम्।।२।।**
**बौद्धजैनमुसल्माना स्तथेसामार्गगामिनः।**
**यदैव वैष्णवा जातास्तदैव सर्वपातकात्।।३।।**
**प्रमुक्ता विष्णुसम्बन्धाद् ग्राह्या एव तदैव ते।**
**अत्रार्थे दृश्यते लिङ्गं वैष्णवाचारपद्धतौ।।४।।**

द्विधा हि वैष्णवदीक्षा दृश्यते तत्संप्रदाये। विरक्तदीक्षाऽविरक्तदीक्षा चेति। विरक्तदीक्षायामपि सन्न्यासदीक्षा तद्विभिन्नेति यथाधिकारं प्रदीयते। तत्राविरक्तदीक्षायामेवायं विचारः प्रसरति। विरक्तदीक्षायां विवाहादिव्य-वहारस्याप्रसक्तेः। वैष्णवानां व्यवहारेऽन्योन्यं भेदाभावात् साम्यमेव विलोक्यते। अतः सापिण्ड्यं विहाय पारस्परिकविवाहादिव्यवहारे बाधकाभावात् बौद्धादिम्लेच्छावसानानां त्रयीधर्मस्थितैरपि तै र्विवाहा-दिव्यवहारो न्यायप्राप्तः। विष्णुसम्बन्धात् सर्वतोभावेन शुद्धानां तेषां ग्राह्यता सिद्धप्राया। अत एव तत्र वर्णादिकृत उच्चैस्त्वाद्यभिमानः परिह्रियते। यथोक्तमाचार्यपादैः—

**उत्कृष्टवर्णैरपि वैष्णवै र्जनै र्निकृष्टवर्णः स तदीयसेवने।**
**तथानुसर्तव्य इतीष्यते बुधैः शास्त्रै र्विधेये विधिगोचरैः परैः।।** इति।
(वैष्णवमताब्जभास्करे ४.५६)

अपि च—

सामान्यात्मनैव वैष्णवानां माहात्म्यं प्रतिपादितमाचार्यैः।

तथा हि वैष्णवमताब्जभास्कर एव—

**'पञ्चायुधाङ्काङ्कितवैष्णवा ये विप्रा अथ क्षत्रियवैश्यशूद्राः।**
**स्त्रियस्तथाऽन्येऽपि च विष्णुरूपा जगत्पवित्रप्रपवित्रिणस्ते।।**
**ते सर्वतीर्थाश्रयभूतदेहा देशे महाभागवता वसन्ति।**
**यस्मिन् स तद्दर्शनसंस्थितिभ्यां सूते सुपुण्यं निखिलाघशून्यम्।।** इति।
(७.५.६)

भगवत्परायणा वैष्णवा निष्कल्मषा एव भवन्ति। यथोक्तं तैरेवाचार्यैस्तत्रैव—

**'तदर्चनात्तत्पदनीरपानात् तत्सङ्गतेस्तत्प्रणते र्विधानात्।**
**नृणां हि तच्छिष्टसुभोजनाच्च स्यात् कोटिजन्मार्जितपापनाशः'।।**
इति। (७.७)

एतैरेव लिङ्गै र्वैष्णवानामन्योन्यं निर्गतवर्णप्रविभेदं विवाहादिकृत्यं भवतु न तु स्वस्ववर्ग एवेति प्राप्ते—

**ब्रूमः**

**वैष्णवानामपि प्रायस्त्रय्यां तन्मूलकादिषु।**
**शास्त्रेषु चादरो भूयान् सर्वैरेव विलोक्यते।।५।।**
**तेऽपि वेदं पुरस्कृत्य विशुद्धाचारसन्ततिम्।**
**वितन्वते ततस्तत्र वर्णसङ्करकारिका।।६।।**
**गर्हिता सर्वलोकेषु त्रयीधर्मप्रणाशिका।**
**व्यवस्था नोचितैवेति तदाचारात् प्रतीयते।।७।।**

यत्तूक्तं साम्यधर्मे ते सुस्थिता इति तत्र वै।
न कोऽपि दोषलेशः स्यात् पण्डितानामियं स्थितिः।।८।।
विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।।९।।
इत्येतत् सकलं तथ्यं श्रीकृष्णेन स्वयम्भुवा।
जीवानामीशशेषत्वाद्यपेक्षातः प्रकीर्तितम्।।१०।।
न चैतेन त्रयीसिद्धा व्यवस्था धर्मतः स्थिता।
दूषणीया भवेल्लोके साम्यदृष्ट्या कथञ्चन।।११।।
तस्माद् धर्माविरोधेन विवाहादिक्रिया सदा।
स्ववर्ग एव कर्तव्या कुलधर्मानुसारतः।।१२।।

एकादशीकृष्णजन्माष्टमीतिथिकालादिकं विहाय वैष्णवा अपि स्मार्ताचारे समाना एव सर्वत्र सर्वैरेव विलोक्यन्ते। सर्व एव ते महात्मानः श्रुतितन्मूलरामायणेतिहासपुराणसंहितादिस्मृतिशास्त्रेषु धर्मविद्यास्थानेषु समानादरसम्पृक्ता एव। यत्राप्येकादशीतिथ्यादिषु नैकमत्यं प्रदृश्यते तत्रापि विकल्पस्वीकारे बाधकाभावः। तन्मूलकश्रुतिसम्भवात्। बहुशो हि विरुद्धाः श्रुतयो व्रीहियवसाधनकयागषोडशिग्रहणाग्रहणविषयिण्यः प्रदृश्यन्त एव यत्र विकल्पस्वीकारमन्तरा न कापि गतिः। एवमत्रापि द्रष्टव्यम्। न हि भगवत्कल्पाः श्रीमद्रामानुजरामानन्दाचार्यप्रभृतयः प्रातःस्मरणीया आचार्याः श्रुतिविरुद्धं पदार्थं स्मरेयुः। एवञ्च वेदानुकूल्येन विशुद्धाचारपरम्परां निर्वहत्सु वैष्णवेषु वर्णसाङ्कर्यविधायिनी त्रयीधर्मक्षयकारिणी सर्वलोकनिन्दिता स्वच्छन्दतया यत्र कुत्रचिदेव विवाहादिव्यवहारव्यवस्था नौचितीमावहतीति तदाचारादेव निश्चीयते। न हि कोऽपि वैष्णवोऽन्तर्जातीयं विवाहं मनसाऽपि स्वीकरोति। प्रत्युत निन्दत्येव तं कुलधर्मविदारकम्। अपि चान्तर्जातीयविवाहे वर्णसाङ्कर्यप्रयुक्त-सकलवर्णविनाशादाचार्याणां गृहीतवैष्णवधर्मैः स्वस्ववर्णधर्मः परिपालनीय एवेति कथनं निरवकाशं भवेत्। तथा हि निगदितं श्रीमद्रामानन्दाचार्यैः—

'लोकसंग्रहणार्थन्तु श्रुतिचोदितकर्मणाम्।
शेषभूतैरनुष्ठानं तत्कैङ्कर्यपरायणैः'।। इति।

(श्री वै.भा. ४.५३)

न ह्यत्र वर्णविभागं विना श्रुतिचोदितकर्मणामनुष्ठानं सम्भवति। आत्मयाथात्म्यविदां ज्ञानैकाकारतया साम्यदर्शनं सजातीयविवाह-नियमेऽविरुद्धम्। शरीरगतवैषम्यापेक्षयैव व्यवहारो भवति। तद्वैषम्यञ्च वैष्णवैरेव प्रतिपाद्यते। यथोक्तं महापुरुषैः श्रीमद्वेदान्तदेशिकार्यैः—

'न शरीरगतं वैषम्यं प्रतिषिध्यते।
किन्तु तदेवात्र प्रतिपाद्यते'।। इति।

(तात्पर्यचन्द्रिकायाम् ५.१७)

एतेन शरीरगतवैषम्यप्रतिषेधका धर्मनैरपेक्ष्यपोषका विहिपादयः परास्ताः। आत्मदृष्ट्या समत्वे शरीरदृष्ट्या वैषम्ये च स्वीक्रियमाणे न ब्राह्मणादिषु पूज्यत्वादिसाम्यबुद्धिप्रसक्तिः। ततश्च अभोज्यान्नत्वादिदोषः स्मृतो न विरुध्यते। भगवता श्रीकृष्णेनापि जीवानां श्रीमन्नारायणशेषत्वाद्यपेक्षयैव साम्यं वदता शरीरप्रयुक्तं वैषम्यं सकलञ्च लौकिकवैदिकोभयं व्यवहारजातं यथाशास्त्रमेवेति समर्थितम्।

एवञ्चात्मदृष्ट्या साम्यप्रतिपादनमात्रेण धर्मतो न्यायतश्च विद्यमाना व्यवस्थाऽशक्यनिह्नवा। तथा च त्रय्या अत्यन्तपरिभ्रष्टानां परिगृहीतवैष्णवधर्माणामपि यथा लोके व्यवस्थितस्य वर्णाश्रमोचितस्य धर्मस्य विरोधो न स्यात् तथैव शास्त्राविरोधिकुलधर्मानुसारेणैव स्ववर्ग एव विवाहादिव्यवहारः सिद्ध्यति।

**प्रयोजनन्तु धर्मविलोपः पूर्वपक्षे सिद्धान्ते स नेति।**

**।। इति पातित्यपेटिकायामष्टमं स्वीकृतवैष्णवधर्माणां म्लेच्छयवनादीनां स्ववर्ग एव विवाहादिव्यवहाराधिकरणम्।।८।।**

●

# अथ नवमं कृत्वाचिन्तायामार्यावर्तस्थितानामेव पतितानां म्लेच्छादिदीक्षाप्रदेयत्वाधिकरणम्

अतः परमधिकरणत्रयं कृत्वाचिन्तया विचार्यते—

म्लेच्छादीनां पतितैरेव दीक्षाग्रहणपक्षे किं पतितानां म्लेच्छादीन् दीक्षयितुं समुद्रलङ्घनपुरःसरं म्लेच्छदेशगमनं कार्यमुत नेति? किन्तावत् प्राप्तम्? कर्तव्यमेव पतितै र्म्लेच्छदेशगमनमिति। कुतः?

**वैष्णवादिमहामार्गे म्लेच्छाद्या बद्धसौहृदाः।**
**भारतागमने चेत् स्युः सामर्थ्यविकलाः किल।।१।।**

**तदा शुद्धैरगम्यत्वात् पतितैरेव सादरम्।**
**तद्देशमुपलभ्यैव दीक्षणीयाः प्रयत्नतः।।२।।**

**परोपकारहेतुत्वे दार्ढ्येन समुपस्थिते।**
**पतितानामनुज्ञानं पौनःपुन्येन गम्यते।।३।।**

**पुनःपातित्यदोषोऽपि तेषां नैवं प्रसज्यते।**
**विहिपादिदले तावत् स्थिति वैं सुप्रतिष्ठते।।४।।**

**धरित्रीं वैष्णवीकर्तुं पतितैस्तैः पुनः पुनः।**
**समुद्रलङ्घनं कार्यमिति प्राप्तेऽभिधीयते।।५।।**

**सिद्धान्तः**

**लौकिकाशुद्धिसत्त्वेऽपि शुद्धिः सा पारलौकिकी।**
**प्रायश्चित्तेन सञ्जाता त्वदुक्त्या तु विरुध्यते।।६।।**

**यत्कृते वैष्णवो धर्मः समाम्नातो महीतले।**
**ध्वंसे तस्य समुत्पन्ने नृजन्मैव वृथा भवेत्।।७।।**

परोपकारपिण्डं तद् द्वारीकृत्यापि सर्वथा।
पतितानां पुन र्नाब्धे र्लङ्घनं स्यादिति स्थितम्।।८।।

वैष्णवादिमहामार्गसम्पन्ना सकला धरा।
आर्यावर्तस्थितैरेव विधातव्या ततस्तु तैः।।९।।

विह्निपादिदलस्थानां कर्तव्यविमुखात्मनाम्।
सत्ताऽप्यभव्या लोकेऽस्मिन् सचेतास्तत्र को विशेत्।।१०।।

प्रयोजनन्तु स्वेच्छाचारिताप्रवर्तनं पूर्वपक्षे सिद्धान्ते तन्नेति।

।। इति नवमं पातित्यपेटिकायां कृत्वाचिन्तायामार्यावर्तस्थितानामेव पतितानां म्लेच्छादिदीक्षाप्रदेयत्वाधिकरणम्।।९।।

# अथ दशमं कृत्वाचिन्तायां म्लेच्छादीन् दीक्षयितुं विरक्तवैष्णवानामेव तद्देशगमनाधिकरणम्

रामानन्दीयानां वैष्णवानां भारते तीर्थस्थान एव निवासस्मरणात् समुद्रलङ्घनमप्राप्तमेव। श्रीमच्छङ्कराचार्याणां दण्डिनां दशनामिसन्न्यासिनाञ्च त्रय्यनुवर्तनशालित्वाद् न कथञ्चिदपि समुद्रलङ्घनमनुमतमस्ति। येषां वैष्णवानां समुद्रलङ्घनविषयकाचार्याभ्यनुज्ञानाभिमानोऽस्ति तेषां श्रीमद्रामानुजीयानां कृतेऽयं विचारः प्रस्तूयते। केचन रामानुजीयाः—

**'सर्वदेशदिशाकालेष्वव्याहतपराक्रमा।**
**श्रीरामानुजदिव्याज्ञा वर्धतामभिवर्धताम्।।**

**माता तु कमला देवी पिता देवो जनार्दनः।**
**बान्धवा विष्णुभक्ताश्च स्वेदशो भुवनत्रयम्'।।**

इतिश्लोकद्वयसाहाय्यावलम्बिनः समुद्रलङ्घनविषयकाभ्यनुज्ञानं स्वीकुर्वन्ति। प्रामाणिकास्तु तान् भ्रान्तानेवाभिमन्यन्ते। उक्तश्लोकद्वयेन समुद्रलङ्घनाभ्यनुज्ञानस्याप्रतीयमानत्वात्। सर्वेषु देशेषु सर्वासु दिक्षु च श्रीमद्रामानुजाचार्याणां श्रीमद्भगवन्नारायणचरणनलिनसेवनविषयकाज्ञाऽन्यथा नोपपद्यत इति समुद्रलङ्घनं परिकल्प्यत इति चेत्? न। लोकोत्तरप्रभावशालिनां तथाविधदिव्याज्ञायास्तद् विनाऽप्युपपद्यमानत्वात्। कथमन्यथा तस्या दिव्यत्वं सिध्येत्? श्लोकेनापि श्रीमदाचार्याणां सकलवसुन्धरावर्तमानजनेषु भगवद्भक्तिं तद्द्वारा तत्प्राप्तिञ्च कामयमानानां लोकोत्तरसदाशयतैव ध्वन्यते। द्वितीयश्लोकेनापि भगवत्-तद्भक्तप्राशस्त्यमेव प्रतिपाद्यते तदीयशुभभावनाप्रतिपादनद्वारा। वेदादिसकलशास्त्रप्रतिषिद्धे वस्तुनि तदतिक्रमणविषयिणी यद्यभ्यनुज्ञाऽपि स्यात् तदापि तस्याः प्रामाण्यं न सिध्येत्। शास्त्रान्तरेण विरोधात्। एवञ्च त्रैवर्णिकानां कृते समुद्रलङ्घनं श्वमुखवर्तिपूतिगन्धिनरास्थि-शकलमिवामेध्यमेव सिध्यति। स्थितेऽप्येवं म्लेच्छादीनां वैष्णवीं दीक्षां

विधातुं समुद्रलङ्घनस्य ये वैधतामभिलषन्ति तदर्थोऽयं विचार इति न विस्मर्तव्यम्।

तत्रायं संशयः—किं सकलैरेव चतुराश्रमिभिः समुद्रलङ्घनं विधातव्यमुत अस्वीकृतगृहस्थाश्रमै र्विरक्तैरेवेति। किन्तावत् प्राप्तम्? सकलैरेव चतुराश्रमिभि र्वैष्णवैरिति। कुतः?

यद्यनुज्ञा भवेल्लोके वैष्णवाचार्यसम्मता।
सर्वैरेव ततः कार्यं वैष्णवैरब्धिलङ्घनम्।।१।।

समयोलङ्घनं तेषां निषिद्धाचरणन्तथा।
न स्यात् पातकं नूनं प्रपत्तिपरचेतसाम्।।२।।

यत्कर्माचरणाद् वेदबाह्या अपि कुमार्गतः।
विमुखा भजमानाः स्यु र्नारायणमधोक्षजम्।।३।।

कथं वा पातकं तत् स्यात् कर्माचार्यकृतं महत्।
नातो धर्मः परः कश्चित् श्रुतो दृष्टो महीतले।।४।।

नारायणपरान् सर्वान् कर्तुं म्लेच्छादिकान् शठान्।
वैष्णवत्वाविशेषेण सर्वे गच्छन्तु यत्र ते।।५।।

नेच्छेद् गन्तुं विरक्तश्चेत् त्रिदण्डी सुसमाहितः।
गृहस्थः सर्वथा यायात् सतां धर्ममनुस्मरन्।।६।।

तस्यैव म्लेच्छदीक्षातो धनलाभात् समृद्धता।
प्रयोजनवती वा स्यात् तस्मात् तैरेव गम्यताम्।।७।।

नैष्ठिकव्रतमाप्ताश्चेद् वैष्णवा ये धनेहया।
परोपकारं वाञ्छेयुस्तेऽपि गच्छन्तु सत्वरम्।।८।।

सर्वथा गृह्यधर्मस्थवैष्णवाब्धिविलङ्घनम्।
न्यायातः प्राप्तमेवेति सिद्धान्तः स्यादतः परम्।।९।।

### सिद्धान्तः

अनुज्ञासम्भवेऽपीह गृहस्थै र्वैष्णवैः सदा।
समुद्रलङ्घनं नैव कर्तव्यमिति बुध्यताम्।।१०।।

त्याज्यत्वलक्षणाऽशुद्धि र्गृहस्थानां व्यवस्थिता।
सन्ततौ गम्यते दुष्टरोगवद् निन्द्यकर्मतः।।११।।

विरक्तास्तु समाजेभ्यः स्वत एव बहिर्गताः।
त्याज्यत्वेऽपि ततस्तेषां न किञ्चिदपि हीयते।।१२।।

समयोल्लङ्घनाच्चैव निषिद्धाचरणात्तथा।
पातकत्वप्रसक्ति र्वै वैष्णवत्वेऽपि विद्यते।।१३।।

धर्मो धर्मः सदा पुंसां पातकं पातकं सदा।
वैपरीत्यं कथं वा स्यात् श्रुत्यैव यद् व्यवस्थितम्।।१४।।

श्रेयसे प्रेयसे वाऽपि मर्यादा या प्रचोदिता।
तत्समादरणादेव बाह्या ग्राह्या विपश्चिताम्।।१५।।

एकदेशस्थितो दोषः सर्वाङ्गेषु यदा व्रजेत्।
तत्प्रसक्ति र्निवार्यैव सर्वदा हितकाङ्क्षिभिः।।१६।।

एवं विरक्त एवैको दोषवान् यदि जायते।
तन्मात्रगामिदोषत्वात् कदाचित् क्षम्यतां व्रजेत्।।१७।।

ततश्च त्याज्यतादोषे विद्यमाने सति त्विह।
विरक्तो म्लेच्छदीक्षायै गच्छेदन्यो न यत्र ते।।१८।।

गार्हस्थ्यस्य गरीयस्त्वाद् न्यायतो द्रव्यसंग्रहात्।
धर्मानुष्ठानसिद्धेश्च नोचितं म्लेच्छतो धनम्।।१९।।

धनेन तेन किन्तावद् धर्मबाधेन यद् भवेत्।
येन च श्रेयसो ध्वंसो धर्म्यं हि धनमुच्यते।।२०।।

एवञ्च वैष्णवाचारमर्यादापालनस्पृहः।
विरक्ता एव तद्देशं गन्तुमर्हा इति स्थितम्।।२१।।

प्रयोजनन्तु वर्णाश्रमधर्मविलोपकरणं पूर्वपक्षे सिद्धान्ते तन्नेति। अथवा तदधिकारित्वविलोपस्तदभावश्चेति यथायथं स्वयमूह्यम्।

।। इति दशमं पातित्यपेटिकायां कृत्वाचिन्तायां म्लेच्छादीन् दीक्षयितुं विरक्तवैष्णवानामेव तद्देशगमनाधिकरणम्।।१०।।

# अथैकादशं कृत्वाचिन्तायां म्लेच्छाधिगतधनस्य शूद्रेषु धनहीनेषु वितरणाधिकरणम्

अतः परं म्लेच्छादिदीक्षाविधानेन लब्धतद्धनस्योपयोगविषयको विचारोऽवसरप्राप्त आयाति—किं विरक्ता वैष्णवा म्लेच्छादिभ्यः प्राप्तस्य धनस्योपयोगं निजाश्रमसमृद्धिविवर्धने कुर्युरुत गृहाश्रमिभ्यो दद्युरिति? तत्रापि तदीयं धनं ब्राह्मणा एव दानपात्रत्वाद् गृह्णीयुरुत क्षत्रियाद्या अपि किं वा शूद्रा एवेति? तत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—

दीक्षादानैः सदाचारिविरक्तवैष्णवै र्धनम्।
म्लेच्छेभ्योऽलम्भि यत्तत्र स्वता तेषां प्रतीयते।।१।।

मठारामादिविस्तारे तीर्थयात्रासु यानतः।
तथा यागादिकार्येषु भूयो धनमपेक्ष्यते।।२।।

दानस्यावसराभावात् तस्माद् वैष्णवैस्तु तद्।
धनं स्वीयसमृद्धीनां प्रताने विनियुज्यताम्।।३।।

### सिद्धान्तः

नैतत् सारं यतस्तेषां विरक्ति र्बाध्यते ततः।
सकलं तद्धनं श्रेष्ठब्राह्मणेभ्यः प्रदीयताम्।।४।।

पात्रत्वाद् ब्राह्मणः सर्वं ग्रहीतुमर्हति ध्रुवम्।
तद्धनेन च तस्यापि धर्मबाधो भविष्यति।।५।।

दोषः स एव राजन्यवैश्ययोश्च प्रसज्यते।
अत एव च शूद्रेषु धनहीनेषु सर्वदा।।६।।

म्लेच्छादीनां धनं सर्वं न्यायतस्तु प्रसर्पति।
नैतावता च शूद्राणामाचारो रोधमेष्यति।।७।।

प्रयोजनन्तु सनातनमर्यादाविलोपस्तदभावश्चेति पूर्वोत्तरपक्षाभ्यामेवोक्तप्रायम्।

।। इति पातित्यपेटिकायां कृत्वाचिन्तायां म्लेच्छाधिगतधनस्य शूद्रेषु धनहीनेषु वितरणाधिकरणम्।।११।।

●

# अथ द्वादशं
# व्यवस्थयाऽऽश्रमधर्मस्वीकाराधिकरणम्

गतेयं कृत्वा चिन्ता। अतः परं स्वीकृतवैष्णवमार्गाणां पतितानान्तथाऽन्येषामपतितानाञ्चाश्रमव्यवस्था विचार्यते। यद्यपि कलौ वानप्रस्थाश्रमः परिवर्जितो वर्तते। ततः परिशेषादाश्रमत्रयमेवाधिकृत्य विचारः क्रियते। किं सर्वैः सर्व आश्रमा यथापेक्षं ग्रहीतव्या उत यथाशास्त्रं व्यवस्थयेति? किन्तावत् प्राप्तम्? सर्वैः सर्व आश्रमाः परिग्रहीतव्या इति। कुतः?

वेदाध्ययनकार्यार्थं ब्रह्मचर्यं व्यवस्थितम्।
तदूर्ध्वं धर्मसिद्ध्यर्थं गार्हस्थ्यं स्यात् ततस्तु सः।।१।।
कलौ सन्न्यासधर्मः स्याद् येन ब्रह्मणि लीयते।
वैराग्ये जायमाने तु क्रमं त्यक्त्वा स गृह्यते।।२।।
वैष्णवादिविधायान्तु भगवद्भक्तिसिद्धये।
ब्रह्मचर्यञ्च सन्न्यासः साम्प्रतं परिगृह्यते।।३।।
प्रजातन्तुवितानाय रतिसिद्ध्यर्थमेव वा।
गार्हस्थ्यं गृह्यते पुम्भिः पित्र्यादेशप्रयुक्तितः।।४।।
गृहस्थाश्रमसम्पृक्ता अपि केचिद् महाशयाः।
निष्ठया भजमानाः स्यु र्नारायणमधोक्षजम्।।५।।
प्रयत्नेन यदा येषां पत्नीलाभो न विद्यते।
नैष्ठिकाश्रममाश्रित्य भजन्ते तेऽपि तं सदा।।६।।
अत इच्छाप्रयुक्तत्वादाश्रमाणां व्यवस्थया।
ग्राह्यत्वं नैव संसिद्धं यथेच्छं तत् प्रवर्तताम्।।७।।

**सर्वे वर्णास्तदन्येऽपि स्वेच्छया वा परेच्छया।**
**आश्रमानधिगृह्णन्तु कृतमत्र व्यवस्थया।।८।।**

मानवमात्रविषयत्वाद् धर्मस्य गार्हस्थ्ये धर्मानुष्ठानयोग्यतासम्पादनार्थं यथाधिकारं ब्रह्मचर्यमावश्यकम्। यद्यपि वेदाध्ययन एव ब्रह्मचर्यशब्दो मुख्योऽस्ति तथापि लोके तदर्थव्रतेन्द्रियसंयमादिष्वर्थेषु प्रयुज्यमानो गौण्या वृत्त्या दृश्यते। तदर्थमेवोक्तं 'वेदाध्ययनकार्यार्थं ब्रह्मचर्यं व्यवस्थितमिति। समाप्तवेदाध्ययनतदर्थविचारो लब्धदुष्करपदाभिधायनीयकं ग्रार्हस्थ्यमङ्गी-करोति। तत्र प्रतिषिद्धकर्मवर्जनपुरःसरनित्यनैमित्तिकधर्मानुष्ठानव्यग्रचेता आवश्यकत्वाद् धर्मत्वाच्च काम्यमप्यनुतिष्ठति सहैव प्रजातन्तुवितानेन। प्रजातन्तुं मा व्यवच्छैत्सीरिति तैत्तिरीयाः समामनन्ति। अतः प्रजातन्तुवितानमपि धर्मान्तर्गतमेव यदि यथाशास्त्रं सम्पद्यते। परिसमाप्याशेषं गृह्यकृत्यं मुनिवृत्तो वानप्रस्थो भवति कलिव्यतिरिक्तयुगेषु। ततस्तुरीये वयसि तुरीयाश्रममाश्रित्य विगलितपरिमितप्रमातृत्वो यथोपदेशं ब्रह्म सम्पद्यत इति वेदान्तविदो वदन्ति। क्रममिममाश्रित्यैव निःश्रेयसमिति शास्त्राभिज्ञा ब्रुवते। क्रमातिक्रमेण ब्रह्मचर्यादेव ये परिव्रजन्ति तेषामन्तरायः पदे पदे चकास्ति। श्रीमल्लब्धभगवत्कृपया एवंविध उत्तीर्णसकलान्तरायः कश्चिदेव 'कश्चिन्मां वेत्ति तत्त्वत' इति न्यायेन परमपदवीमुपैति। अन्ये प्रायः पङ्के गाव इव सीदन्ति प्रपञ्चमेव पुष्णन्तः। सन्न्यासे ब्राह्मण एवाधिकरोति। तदितरे योषितश्च स्वीकृत्य तं पतन्तीति सकलशास्त्रनिष्कर्षः। इयञ्च त्रयीव्यवस्थापिता विधा। वैष्णवविधायां नेयं व्यवस्था सिद्ध्यति। भगवद्भक्तिपरिपोषणार्थमेव ब्रह्मचर्यसन्न्यासयोः स्वीक्रियमाणत्वात्। गृहस्थाश्रमे तु प्रजातन्तुवितानरतिसिद्धिभ्यां सहैव भगवद्भक्तिरपि भवति। केचित् पुनः पत्न्या अलाभे नैष्ठिकव्रतं सन्न्यासञ्च स्वीकुर्वन्ति। अपि च, तथाविधा अपि महापुरुषा विलोक्यन्ते ये केवलं मठाध्यक्षपदवीमवाप्तुमेव स्वीकृततुरीयाश्रमा भवन्ति। ते च धर्मनिरपेक्षतापरिपोषका एव सर्वधर्मसमभावसिद्धान्तमङ्गीकृत्य सर्वतोभावेन सम्पदमेवार्जयन्ति। तथा चान्ये साम्प्रतिकराजनीतौ जनाधारितासम्पादनार्थमेव संन्यस्यन्ति प्राप्नुवन्ति च सचिवादिपदम्। एवंविधाश्च सर्वे यथापेक्षं राजनैतिकदलमाश्रयन्ते। तथाविधा अपि

सन्न्यासिनो भारते विलोक्यन्ते ये स्त्रीपरिग्रहं वैधमङ्गीकृत्य प्रजातन्तुवितानं कुर्वते। तेषाञ्च सत्पुत्राः श्रीमद्भागवतादिकथाप्रवचने संलग्ना विलोक्यन्त एव। वृन्दावनादौ प्रमददभक्त्याश्रमादौ सर्वमेवं विलोकनीयमेव। अन्ये चासूययैव त्रिदण्डादिधारणं कुर्वन्ति स्वीयमाचार्यत्वं ख्यापयितुम्। अत एवैकस्मिन्नेव पीठे विवादग्रस्तमाचार्यबहुत्वं दरीदृश्यते। विवादश्चायं न क़ेवलं वैष्णवपीठेष्वेव, शङ्कराचार्यपीठेष्वपि विद्वेषलोभादिप्रयुक्तो भवतीति नाविदितं सर्वलोकस्य। अत्र विपश्चित्समुदायोऽपि मौनमालम्ब्य प्रतिपक्षिगुह्यप्रवेशन्यायमङ्गीकृत्य व्यवहरति। सर्वथा तावदाश्रमव्यवस्था न प्रतीयते। आह-लोकव्यवहारमेव विलोक्य भवान् ब्रूते। न चैवं युक्तमिव प्रतिभाति। शास्त्रचक्षुषा भवितव्यम्। यथाशास्त्रं वक्तव्यमेव। शास्त्रन्तु व्यवस्थां प्रतिपादयति। एवन्तर्हि कृतमव्यवस्थाप्रतिपादनव्यसनेन। मैवं वोचः। न्यायानुगतविचारोऽयं न न्यायपराङ्मुखः। वैष्णवमार्गे श्रीमन्नारायणप्रपत्तिसिद्धिरेव परमप्रयोजनतया स्थिता। सा च यया कयाचिद् विधया सिध्यति तयैव साध्या। गृहस्थाश्रमे यदि सिध्येत् सा तर्हि स एव ग्राह्यः। आश्रमान्तरे तत्सिद्धावाश्रमान्तराण्येव ग्राह्याणि भंवन्ति। प्रपत्तेश्चाधिकारिणः सर्वे भवन्तीति तदीयागमाचार्यवचनैरवगम्यते। तथा च भरद्वाजसंहितायाम्—

**'ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चैवान्त्यजास्तथा।**
**सर्व एव प्रपद्येरन् सर्वधातारमच्युतम्।।**
**बालमूकजडान्धाश्च पङ्गवो वधिरास्तथा।**
**सदाचार्येण सन्दिष्टाः प्राप्नुवन्ति परां गतिम्'।।** इति।

अगस्त्यसंहितायामपि—

**स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः।**
**लोकाश्चाण्डालपर्यन्ताः सर्वेऽप्यत्राधिकारिणः।।** इति।

वृद्धहारीतस्मृतावपि—

**ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथाऽपरे।**
**तस्याधिकारिणः सर्वे सत्त्वशीलगुणा यदि।।** इति।

एतत्सकलागमवचनानि हृदि कृत्वैवाचार्यपादैरभिहितम्—

सर्वे प्रपत्तेरधिकारिणः सदा
शक्ता अशक्ताः पदयो जगत्प्रभोः।
अपेक्ष्यते तत्र कुलं बलञ्च नो
न चापि कालो न च शुद्धताऽपि वै।। इति।

(श्रीवैष्णवमताब्जभास्करे ४.५०)

एवञ्च श्रीमद्भगवत्प्रपत्त्युपायत्वेन स्थितानामाश्रमाणां न व्यवस्थासिद्धिः। तथा च ब्राह्मणादिम्लेच्छावसानाः सर्व एव यथारूचि प्रपद्यन्तामाश्रमानित्येवं प्राप्ते, अभिधीयते—

नास्ति वाञ्छाप्रयुक्तत्वादाश्रमाणां स्थिति र्भुवि।
वैष्णवानां समाजेऽपि श्रुत्युक्तो धर्म इष्यते।।९।।

ब्रह्मचर्ये च गार्हस्थ्ये कलौ क्षत्रियवैश्ययोः।
संस्थितिः क्रमशः प्रोक्ता न सन्न्यासे कदाचन।।१०।।

ब्राह्मणानाञ्च सन्न्यासो विद्यावैराग्यशालिनाम्।
शास्त्रेषु दृश्यते नूनं शूद्रा गार्हस्थ्यभागिनः।।११।।

एवञ्च ये त्रयीभ्रष्टाः सर्वे ते निष्ठया पुनः।
एकं गार्हस्थ्यमाश्रित्य भजन्तां पुरुषोत्तमम्।।१२।।

यदा वा दैवयोगात्ते गृहस्थाश्रमवञ्चिताः।
भवेयु र्वै तदा कण्ठीं गृहीत्वा स्यु र्यथारुचि।।१३।।

ये वा गार्हस्थ्यमाश्रित्य मध्ये प्रव्रजन्ति च।
ते सर्वे नरके घोरे पतन्तीति श्रुतीरितम्।।१४।।

गार्हस्थ्यलङ्घनेनापि सन्न्यासं संश्रयन्ति ये।
विष्णो र्मायागृहीतास्ते नाप्नुवन्ति परं पदम्।।१५।।

अतः पूर्वाश्रमादेव सन्न्यासं गृह्णन्तु ते।
एषणात्रयमुक्ता ये जन्मान्तरतपःश्रिया।।१६।।

गार्हस्थ्यमुपलभ्यापि प्रपञ्चैकपरायणाः।
गृह्यकृत्यपृथग्भूता दानादिधर्मवञ्चिताः।।१७।।
ये सन्ति भगवद्भक्तेः संशून्यहृदयास्तथा।
ते सर्वे विभवव्यस्ताः पतन्ति निरये सदा।।१८।।
एवं व्यवस्थया सिद्धा आश्रमा ये सनातनाः।
तानाश्रित्य यथाशास्त्रं कर्तव्या भक्तिरादरात्।।१९।।
सन्न्यासो ब्राह्मणैरेव कालेऽनुष्ठितकर्मभिः।
भगवद्भक्तिमुद्दिश्य ग्राह्यो विद्याविशारदैः।।२०।।
परिपक्वकषायैश्च जाते वैराग्यवैभवे।
ब्रह्मचर्याद् गृहाद् वाऽपि गृह्यते स क्वचित्तु तैः।।२१।।
क्षत्रिया वैश्यशूद्राश्च स्त्रियो वापि स्वधर्मतः।
विमुक्ताः प्रव्रजेयुश्चेद् विमोहितधियः क्वचित्।।२२।।
ते सर्वे रौरवे घोरे पतेयुश्च पुनः पुनः।
इति सिद्धान्तनिष्कर्षः शास्त्रदृष्ट्या मयोदितः।।२३।।
गार्हस्थ्यपालनं सम्यक् कर्तव्यं तैरिति श्रुतौ।
लिङ्गं संदृश्यते सर्वं स्मृतौ च समुदीरितम्।।२४।।
एवञ्च बौद्धम्लेच्छाद्यै र्गृहीतवैष्णवैरपि।
स्वप्नेऽपि भिक्षुधर्मोऽसौ नैव ग्राह्यो हितेच्छुभिः।।२५।।

नास्ति वैष्णवानामन्येषां वा मानवानां श्रुतिबाह्यो धर्मो येन चाव्यवस्थयैव किञ्चित् कार्यं भवेत्। सकलैव वैदिकव्यवस्था वैष्णवादिसमाजेऽपीत्युक्तप्रायम्। यद्यपीदानीं क्षत्रिया वैश्याश्च न ब्रह्मचर्यापरनामधेयं वेदाध्ययनं कृत्वा गृहस्थाश्रममुपयन्ति। ब्राह्मणा अपि तथैव प्रायः दृश्यन्ते। आधुनिकशिक्षाव्यामोहग्राहग्रस्ताः सर्वे येन केन प्रकारेण जीविकामुपलभ्य रतिसन्तानवित्तादिप्रतानार्थमेव दारसंग्रहं प्रकुर्वते। वेदाध्ययनपरिपाटी ब्राह्मणेष्वेव कुत्रचिदेव प्रचलति। यथाऽन्यत्र तथा

वैष्णवेष्वपि विशेषतो रामानुजीयसम्प्रदायेषु। एवञ्च क्षत्रियवैश्ययो र्ब्रह्मचर्यग्रहोऽकिञ्चित्कर एव तथापि तत् ताभ्यां ग्रहीतुं शक्यते यथासस्कारं वर्तमानाभ्याम्। गार्हस्थ्येऽपि कैश्चनैव सर्वे धर्माः परिपाल्यन्ते। तत्र प्रायः वित्तपरिग्रहो येन केनचिद् मार्गेण परिवारपरिपोषणाद्येव वा धर्मत्वेन चकास्ति। एवं स्थितौ दूरे चर्चा सन्न्यासपरिग्रहस्य। आश्चर्यमत्र सन्न्यासापरपर्यायं भिक्षुमार्गमङ्गीकृत्य साम्प्रतं सर्वे वर्णा विलोक्यन्ते स्वधर्मपराङ्मुखाः। स्त्रियोऽपि तथैव। अनधिकृतचेष्टैवात्रमूलं न शास्त्रम्। एवमेव बौद्धादिम्लेच्छाव-सानानामप्यगृहीतवैष्णवादिधर्माणां भिक्षुमार्गवर्तमानता दृश्यते नरकतमिस्त्रापरिपातनिदानभूता। यत्र क्रमेण ब्रह्मचर्यगार्हस्थ्यधर्मोपेतानां विद्याविनयवैराग्यतपःशालिनां ब्राह्मणानामेवाधिकारस्तत्र भिक्षुमार्गे तद्भिन्नानां सर्वेषामेव प्रवृत्ति रनर्थभूतैवेति शास्त्रमत्र प्रमाणम्। आश्रमत्रयभाक्त्वञ्च कलौ ब्राह्मणानामेव। शूद्रादयः केवलं ग्रार्हस्थ्यभाज एवेति 'विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदेति वचननेनावसीयते। अत्रापिना म्लेच्छाद्या अपि गृहीतवैष्णवाः परिगृह्यन्ते। मध्येऽपि सन्न्यासपरिग्रह उत्कटवैराग्यसम्पत्तौ जायमानायां गुर्वनुग्रहादिना वा ब्राह्मणानामेव। तद्भिन्नानाञ्च तत्परिग्रहो नरकपातहेतुरिति व्याख्यातप्राया एव श्लोकाः सन्ति। अनधिकारचेष्टाऽपि पातित्यप्रयोजिकेति पेटिकायामेतद्विचारावसरः।

आह—अधिकारसिद्धौ लोकव्यवहारस्य हेतुत्वाल्लोके तावदिदानीं स्वेच्छयैव सन्न्यासपरिग्रहसंदर्शनात् सर्वाधिकारितैव निश्चेतव्या। श्रुतिरपि यदहरेव विरजेत् तदहरेव प्रव्रजेदिति न ब्राह्मणमेव वर्णविशेषं निर्दिशति। विरागभावमेव निमित्ततया सन्न्यासे ब्रूते सा। पूर्वजन्माभ्यासतपःक्रियादिभि र्वैराग्यं मानवसामान्यस्य भवितुमर्हति यतस्तस्माद् ब्राह्मणमात्रसन्न्या-सपरिग्रहोक्ति र्भवतां विद्वेषमूलेति। अथवा मा भूच्छूद्राणां बौद्धजैनयवनम्लेच्छानां परिगृहातवैष्णवादिदीक्षाणां वा सन्न्यासाधिकारो वेदाध्ययनाधिकाराभावादेव चेद् भवान् मन्येत तर्हि द्विजोपाधिधारिणां त्रैवर्णिकानां सिद्ध्यत्यसौ। शास्त्रानुकूलताऽप्यत्रास्ति। तथा हि याज्ञवल्क्यः—

'अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।
शक्त्या च यज्ञकृद् मोक्षे मनः कुर्यात्तु नान्यथा'।। इति।

यमोऽपि तथैव स्मरति—

जातपुत्रो गृहस्थो वा विजितात्मा जितेन्द्रियः।
निःस्पृहः सर्वकामेभ्यः कृतकृत्यः परिव्रजेत्।। इति।

एवमेव शङ्खलिखितावपि—

समाहृतेन्द्रियग्रामो विषयेभ्यः सुदूरतः।
आत्मैकरामो मनसा निरस्य परिपन्थिनः।।
योगाभ्यासेन बहुशो लब्धात्माऽदृढबन्धनः।
सर्वसङ्गनिवृत्तात्मा ब्रह्मचार्यपि सुव्रतः।।
एतै र्गुणैरूपेतश्चेद् गृहस्थो वा प्रजायते।
कृत्वेष्टिं विधिवद् दत्त्वा सर्ववेदसदक्षिणाम्।।
आत्मन्यग्नीन् समारोप्य द्विजो ब्रह्माश्रमी भवेत्।
सोऽधीतवेदतत्त्वार्थो गृहवासमशक्नुवन्।
प्रव्रजेदकृतोद्वाहो वनाच्चीर्णो गृहादपि।। इति ब्रूतः।

अत्राधीतवेदत्वान्नदत्वाग्निमत्त्वसर्वकामकृतकृत्यत्वविजितेन्द्रियत्वात्मैकरामत्वसर्वसङ्गविवर्जितत्वद्विजत्वादीनि सन्न्यासाधिकारिविशेषणान्युक्तानि यानि क्षत्रियवैश्ययोरप्यविरुद्धानि। तस्माद् ब्राह्मणक्षत्रियविशस्त्रयो वर्णाः सन्न्यासमर्हन्तीति निश्चीयते। सर्वमेतल्लोकशास्त्रोभयव्यवहारमालोच्य श्रीमद्रामानन्दाचार्यरामेश्वरानन्दाचार्योऽपि श्रीवैष्णवसन्न्यासमीमांसायां ब्रूते—'द्विजस्यैव सन्न्यासेऽधिकार आयाति। ते च ब्राह्मणक्षत्रियवैश्या ब्रह्मचर्याद् वा गृहाद् वा वनाद् वा कथञ्चित् पारिव्राज्यमर्हन्ति। शूद्राणाञ्च वेदाध्ययनाधिकाराभावात् पारिव्राज्यमेभि र्वचोभिः कथञ्चिदपि न सिद्ध्यति। स्त्रीणान्तु का कथेति।

श्रीमद्रामेश्वरानन्दाचार्यो वैष्णवेतरमताभिप्रायेणाब्रवीत् तदिति तदीयमिमग्रन्थमवलोकनेनावसीयते। सम्मतं च प्राप्तप्रपत्तिकस्य

सन्न्यासाधिकारः। प्रपत्तेश्च प्राप्तिः सर्वैरेव स्त्रीशूद्रपङ्ग्वन्धवधिरादिभि स्तिर्यक्प्राणिभिरपि श्रीमद्भगवदनुग्रहबलेन कर्तुं शक्यत इति सर्वे मानवा म्लेच्छावसानाः स्वीकृतवैष्णवधर्माः सन्न्यासाधिकारभाजो भवितुमर्हन्ति। यथोक्तं तेन श्रीवैष्णवसन्न्याससमीमांसायामेव—

'भगवत्प्रपन्नानां च सर्वतोभावेन विशुद्धत्वात् क्षीणदुष्कृतत्वाच्च सर्वेषामेव सन्न्यासाश्रमप्रवेशाधिकारो दीक्षाप्राप्तेरधिकारश्च सुतरां सिद्ध्यति। किन्तु समेषामेव सन्न्यासग्रहणात् पूर्वं प्रपत्तिः पञ्चसंस्कारश्च परमावश्यकः'। इति।

तत्रैवासावाचार्यप्रवर स्त्रिदण्डधारणे शास्त्रवचनविरोधमङ्गीकृत्य पूर्वोक्तं नियममपलपति। तथा हि तत्रैव तेनोक्तम्—

'किन्तु त्रिदण्डधारणे नायं नियमः। शास्त्रवचनविरोधात्। प्राप्तसन्न्यासदीक्षैरपि स्त्रीशूद्रादिभि स्त्रिदण्डः कदाचिदपि न धारणीयः। अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। अभिमतफलावाप्तेः। सम्प्रदायाचार्याणां शास्त्राणाञ्च वचसां सर्वथा परिपालनमपि भवति। ब्राह्मणक्षत्रियविशां ब्रह्मचारिणां च दण्डनियमोऽवलोक्यते, स्त्रीशूद्रादीनाञ्च दण्डनियमो नास्ति। तथैव स्त्रीशूद्रादीनां पारिव्रज्यायां सत्यामपि त्रिदण्डो न धारणीयो द्विजसन्न्यासिभिरेव धारणीयो नान्यैरिति विद्यते शास्त्राणां नियमः। इति। सत्येवं ब्राह्मणानामेव सन्न्यास इति वचो महासाहसप्रयुक्तमिति चेत्? न। शूद्रादिचाण्डालम्लेच्छावसानां सन्न्यासाधिकारोऽस्तीति श्रीरामेश्वरानन्दाचार्यवचो निरस्तप्रायमेवास्ति जाबालश्रुत्यनुरोधात्। 'ब्रह्मचर्यं परिसमाप्य गृहीभवेत् गृहीभूत्वा वनी भवेद् वनीभूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद् वा वनाद्वा'। (जाबा. ४) इति हि जाबालश्रुतिरस्वीकृतवेदाध्ययना-परपर्यायब्रह्मचर्याश्रमस्य सन्न्यासग्रहणमर्थात् प्रतिषेधति। शूद्रादीनाञ्च ब्रह्मचर्यस्यापशूद्राधिकरणन्यायेनैव निरस्तत्वात् सन्न्यासोऽपि निरस्त एव। न च व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वेति तदुत्तर-वर्तिश्रुत्यनुरोधात् सर्वेषामेवाधिकारः सिध्यत्येवेति वाच्यम्। गार्हस्थ्ये कर्मण्यनधिकृतविषयत्वादस्याः श्रुतेः। न चैतावता वेदाध्ययनाधिकारशून्यानां स्त्रीशूद्रादीनामपि तदधिकारः सिद्ध्यति।

'प्रव्रजिष्यन् वैतस्मादाश्रमादस्मीति वाजसनेयिब्राह्मणे याज्ञवल्क्यकर्तृकं कात्यायिनीमैत्रेयीधनविभागप्रतिपादनमपि सन्न्यासे स्त्रीणामनधिकारं सूचयति। अन्यथा पत्या सहैव तयोरपि पारिव्राज्यं स्यादिति। सर्वकर्मसन्न्यासेऽपि वेदासन्न्यासं प्रतिपादयन् भगवान् मनुरपि वेदसन्न्यासिनः शूद्रसरूपतामापादयन् शूद्रादीनां सन्न्यासानधिकारितां स्पष्टमेव ब्रूते। तथा हि स भगवानाह—

**'सन्न्यसेत् सर्वकर्माणि वेदमेकं न सन्न्यसेत्।**

**वेदसन्न्यासतः शूद्रस्तस्माद् वेदं न सन्न्यसेत्'**।। इति।

(मनु. ६.९६)

एवञ्च स्त्रीशूद्रादीनां सन्न्यासानधिकारेऽपि सन्न्यासाधिकारितां ब्रुवन् श्रीमद्रामेश्वरानन्दाचार्यः सर्वतो मान्य इव प्रतिभाति। तत्प्रभावादेवेदानीं सर्वे वेदान्ता श्रीमद्भगवद्रामानन्दभाष्यसंवलिताश्चकासति। यत्तु प्राप्तसन्न्यासदीक्षैरपि स्त्रीशूद्रादिभिस्त्रिदण्डो न धारणीयः, स तु त्रैवर्णिकैरेव धारणीयः शास्त्रवचनविरोधादित्युक्तं तदपि पूर्वोक्तेनैव प्रत्याख्यानेन निरस्तम्। त्रैवर्णिकविषयं त्रिदण्डधारणमिति परम्पराविरुद्धत्वेनापास्तम्। न हि वैष्णवपरम्परायां क्षत्रिया वैश्या वा त्रिदण्डधारिणो दृश्यन्ते तत्त्वेनानुमन्यन्ते वा। ब्राह्मणेष्वेव तद्दर्शनात्। त्रिदण्डिव्यतिरिक्ता अपि वैष्णवसम्प्रदाये सन्न्यासिनो भवन्तीति तदीयवचनेन प्रतीयते। तत्तु योग्यानुपलब्ध्यैव निरस्तम्। विप्रशब्दस्तावल्लोके ब्राह्मणेष्वेव प्रवर्तते।

तथा च—

**'चतुर्धा भिक्षवो विप्राः सर्वे चैव त्रिदण्डिनः'**।

इति वचनेन ब्राह्मणस्यैव सन्न्यासवत्त्वं त्रिदण्डित्वञ्च सिद्ध्यति। यद्युच्येत—

**'वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः।**

**यस्यैते नियता बुद्धौ त्रिदण्डीति स उच्यते'**।।

इति मनूक्तरीत्या वाग्दण्डादिविषयकत्रिदण्डित्वं तच्च सर्वेषामविरुद्धमिति। तथा सति भवदुक्तरीत्या त्रैवर्णिकैरेव त्रिदण्डो धारणीय इति न सिध्यति। भवन्मतविपरीतमपि सिध्यति ब्राह्मणानामेव वाग्दण्डादियोगात् क्षत्रियादीनां तत्स्वीकारे स्वधर्मातिक्रमप्रसङ्गाच्च। अपि च—

**'त्रिदण्डरूपधृग्विप्रं साक्षान्नारायणात्मकम्।**
**यस्तु पूजयते भक्त्या विष्णुस्तेन प्रपूजितः'।।**

इति दत्तात्रेयस्मृतिमुदाहरता स्वेनैव स्वीकृतं ब्राह्मणैरेव त्रिदण्डो धारणीय इति। यद्युच्येत पूजाविषयत्वेनैतद्वचनं ब्राह्मण एव त्रिदण्डी पूज्यो नान्य इति। नैतावता क्षत्रियवैश्ययोस्त्रिदण्डधारणं विरुध्यते। अत एव—

**त्रिदण्डं वैणवं लिङ्गं द्विजानां मुक्तिसाधनम्।**
**निर्वाणं सर्वधर्माणामिति वेदानुशासनम्।।**

इति जमदग्निवचनं सङ्गच्छते। तत्र हि द्विजानामिति सामान्यतो लिङ्गं त्रैवर्णिकाभिप्रायमिति।

भवतु नाम तथा। किन्तु—

**'चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत्।**
**निःस्पृहः सर्वभूतेषु स्थावरेषु चरेषु च'।।**

इति यमवचनस्य किं करिष्यति तत्रभवान् यदुदाहृतं श्रीवैष्णवसन्न्यासमीमांसायाम्। अपि च, भवतैव खलु महाभागवतेन सन्न्यासविधिप्रकरणे—

**'य एवं विद्वान् ब्रह्मरात्रीमुपोष्य ब्राह्मणोऽग्नीन् समारोप्य वा प्रमीयते सर्वं पाप्मानं तरति तरति ब्रह्महत्यामि'**ति बौधायनवचनन्तथा—

**'ब्रह्मरात्रीं ततो दद्यात् पौर्णमास्यां द्विजोत्तमः।**
**प्रात र्हुत्वा स्वकल्पेन कृत्वा स्नानादिकां क्रियाम्।।**

इति दत्तात्रेयवचनमृदाहृत्य—

**'दत्वा तोयाञ्जलिं विप्रो भक्त्या सम्प्रार्थयेद् हरिम्।**
**सर्वदेवात्मके तोये तोयाहुतिमहं हरे'!।।**
**दत्वा सर्वैषणां त्यक्त्वा युस्मच्छरणमागतः।**
**त्राहि मां सर्वलोकेश! गतिरन्या न विद्यते।।**
**सन्न्यस्तं भो जगन्नाथ! पाहि मां मधुसूदन!।**
**त्राहि मां सर्वदेवेश! रघुनाथ! सनातन!।।**
**सन्न्यस्तं भो जगद्योने! पुण्डरीकाक्ष! मोक्षद!।**
**अहं सर्वाभयं दत्त्वा भूतानां परमेश्वर!।।**
**युस्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम!।।**

इति यमवचनानि समुदाहृतानि ब्राह्मणमात्रकर्तृकसन्न्यासग्रहण-लिङ्गकानि तानि सर्वाण्यपि विरुध्यन्ते मानवसामान्यार्थसन्न्यासाधिकार-प्रतिपादनेन। ननु स्वीकरोमि तावद् द्विजोत्तममात्रविषयकसन्न्या-सविधिमहमपि तथापि तुष्टीकरणनीत्या वैष्णवसमाजविवर्धनाय श्रीमदाचार्यपादापेक्षयापि स्वीयौदार्यप्रकटनाय रामानुजीयग्राहविस्फारित-वक्त्रोदरग्रासीभवत्श्रीमद्रामानन्दीयसम्प्रदायसंरक्षणाय चापद्धर्ममङ्गीकृत्य सर्वेभ्यः स्त्रीशूद्रम्लेच्छादिभ्योऽपि सन्न्यासोऽस्तीत्युक्तवानस्मि। वैष्णवविषयकत्रिदण्डधारणावधारणायैक-दण्डधारणनिन्दाऽपि—

**'एकदण्डं समाश्रित्य जीवन्ति बहवो द्विजाः।**
**न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम्।।**
**यस्त्वेकदण्डमालम्ब्य ब्राह्मं कर्म यतिस्त्यजेत्।**
**स चाण्डालो महापापी रौरवं नरकं व्रजेत्'।।**

इति विष्णुबृहत्पराशरस्मृतिवचन उदाहरता मया विहिता तथ्यं विजानतापीति चेत्? सत्यम्। तथापि नैवं समाचरणीयं भवेद् भवद्विधै र्जगद्गुरुभिः। अण्वपि वैपरीत्यमादधद् वाक्यार्थो लोकं निःश्रेयसाच्च्यावयति तस्यानर्थजातं सम्पादयति च। सर्वेऽनधिकारिणः

सन्न्यासविधिं स्वीकृत्य स्वधर्मात् पराङ्मुखाः सन्न्यासेनापि निष्प्रयोजना अन्धतामिस्त्ररौरवादिश्रुतिस्मृतिपुराणादिप्रसिद्धनरकतमिस्त्राभाजो भवेयु र्यत्र निमित्तभूता अत्रभवन्तो जगद्गुरव एव भवेयुरिति नैतत् समीचीनम्। अत एव धर्माधर्मविचारप्रसङ्गे समुपस्थिते न विहिपसमर्थितधर्मसंसदिव निर्णयं प्रकुर्वते सकलशास्त्रार्थतत्त्वविचक्षणाः। किन्तर्हि? श्रुतिस्मृति-पुराणादिचतुर्दशविद्याजातं न्यायाँश्च सम्यगाकलय्य देशकालानुसारत आपादयन्ति व्यवस्थाम्। श्रुतिषु स्मृत्यादिषु च ब्राह्मणाधिकारित्वेनैव संन्यासः प्रतिपादितः। तथा हि जाबालश्रुतिः सन्न्यासे विप्रं निर्दिशति—

**'शतं कुलानां पुरतो बभूव तथा पराणां त्रिशतं समग्रम्।**
**एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीति विप्रः।।** इति।

सन्न्यासविधिष्वपि 'ब्राह्मणो निर्वेदमायन्' इति ब्राह्मणस्यैव ग्रहणमस्ति।

एवमेव—

**'ब्राह्मणाः प्रव्रजन्ति'**। (जाबा.)

**'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन निष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनं च मौनञ्च निर्विद्याथ ब्राह्मणः।**
(बृहदा. ३.५.१)

**'तं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति'** इत्येवमाद्या बह्व्यः श्रुतयः सन्न्यासाधिकारित्वेन ब्राह्मणमेव निर्दिशन्ति। इत्थमेव बहूनि स्मृतिपुराणवचनानि सन्ति पूर्वमुदाहृतान्येव यानि। भगवान् मनुरपि निर्दिशत्येतत्तथ्यम्—

**'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।**
**आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्।।**
**यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात्।**
**तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः।।**
(मनु. ६.३८.३९)

अत्र ब्रह्मवादित्वं नैव क्षत्रियादीनां सम्भवति। तत्रैव षष्ठाध्याये—

**'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।**

**पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत'।।**

इत्युसंहारवाक्ये चतुर्विधाश्रमधर्मस्य ब्राह्मणाधिकारिकस्य प्रतिपादनं निर्दिश्य सप्तमाध्याये क्षत्रियधर्मप्रतिपादनप्रतिज्ञा भगवतो मनो 'र्नास्ति क्षत्रियस्यापि सन्न्यास' इति ध्वनति। एतत्सर्वमभिप्रेत्यैव मदुक्तमेवाह वृद्धयाज्ञवल्क्योऽपि—

**'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः।**

**क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः'।।** इति।

एतेन—

**'त्रयाणां वर्णानां चत्वार आश्रमाः'।**

इति कठसूत्रानुरोधेन, तथा च—

**'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात्'।**

इति कौर्माद्युक्त्यनुरोधेन वेदेषु ब्राह्मणनिर्देशस्योपलक्षणत्वमङ्गीकृत्य वर्णत्रयाधिकारवादिनो निरस्ता वेदितव्याः। श्रुतिगतेषु सर्वेषु सन्न्यासविधिषु ब्राह्मणग्रहणस्य यत्किञ्चित्स्मृत्यनुरोधेनोपलक्षणत्वस्वीकारस्यानौचित्यात् प्रमाणाभावाच्च। एवञ्च प्रत्यक्षश्रुतिविरुद्धानां स्मृतीनां 'विरोधेऽत्वनपेक्षं स्यादसति ह्यनुमानमिति' विरोधाधिकरणन्यायेनाप्रामाण्यमेव सिध्यति। विरोधाधिकरणन्तु धर्मशुद्धावेव प्रपञ्चितम्। असति प्रमाणे प्रक्रियान्तरविरोधे वा नोपलक्षणत्वं स्वीक्रियते। उपलक्षणत्वमपि क्वचित् स्वार्थत्यागेन परार्थग्रहणात्मना क्वचिच्च तदत्यागेनेति। 'गङ्गायां घोष' इत्यादिलौकिकप्रयोगे स्वार्थत्यागेनोपलक्षणत्वं स्वीक्रियते। तथा च—

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन'।

इति विविदिषावाक्ये 'ब्राह्मणा' इत्यस्योपलक्षणत्वं स्वार्थात्यागेनैव। अस्त्यत्र प्रमाणमुपलक्षणत्वस्वीकारे। अत्र 'वेदो मन्त्रब्राह्मणात्मक अनूच्यते गुरूच्चारणानन्तरं पठ्यते' इति व्युत्पत्त्या वेदानुवचनं वेदाध्ययनमेवोच्यते।

तच्च त्रैवर्णिकसाधारणमिति स्वीक्रियते। किमिति? उपनीताधिकृतत्वाद् वेदाध्ययनस्य, उपनयने च त्रैवर्णिकाधिकारादित्युक्तमपशूद्राधिकरणे षष्ठे। एतत्सर्वं नोपपद्येतोपलक्षणत्वस्वीकारमन्तरेण। अत एवात्रोपलक्षणत्वं ब्राह्मणपदस्येति। पारलौकिकफलककर्माधिकारसिद्ध्यर्थमात्मज्ञानमपेक्ष्यते क्षत्रियवैश्याभ्यामपि। यत्र तु दानतीर्थस्नानैकादशीव्रतादौ शूद्रस्याप्यपेक्षा तदाऽसावपि पुराणादिभि र्यथाधिकारमात्मज्ञानं सम्पादयेदेव। एतच्च शारीरकभाष्योदाहृतपाठमङ्गीकृत्योपपादितम्।

**'तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण,**

**तपसा श्रद्धया यज्ञेनानाशकेन।**

**चैतमेव विदित्वा मुनि र्भवत्येतमेव,**

**प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति'।।** (बृह. ४.२.२५)

इत्यत्र नैव दृश्यते ब्राह्मणपदं तथापि न्यायानुसारिणी व्यवस्थाऽऽपादिताऽऽचार्यैः। तथा हि—

अत्र विविदिषासम्बन्धो वर्णत्रयस्यैव पूर्वोक्तन्यायात्। मुनित्व-प्रव्रज्ययोस्तु ब्राह्मण एव सम्बध्यते, न तु क्षत्रियो वैश्यो वेति लिङ्गेनैवावधारणा। असत्येवं श्रुत्यन्तरविरोधः स्यादेव। तथा चोक्तं तत्रैव टीकायां वासुदेवप्रकाशिकायाम्—

**'अविद्योत्थकर्मत्यागिनां सन्न्यासिनामेव मुनित्वं भवती'ति।**

एवञ्च स्वार्थात्यागेनोपलक्षणत्वोदाहरणमेतद् भविष्यति—

**'जायमानो वै ब्राह्मणस्त्रिभि र्ऋणै र्ऋणवान् जायते।**

**यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यः'।।** इति।

अत्र यज्ञप्रजास्वाध्यायेषु क्षत्रियवैश्ययोरप्यधिकृतत्वाद् ब्राह्मणशब्दः क्षत्रियवैश्योपलक्षणार्थमेव। एवमन्यत्रापि द्रष्टव्यम्। यत्र चोपलक्षणत्वास्वीकारे न प्रमाणान्तरेण न्यायेन वा विरोधस्तत्र नैव तत् स्वीक्रियते। प्रत्युत तत्रोपलक्षणत्वस्वीकार एव प्रमाणान्तर-न्यायविरोध आपद्येत। तथा हि वाजसनेयिब्राह्मण एव—

**'जनको ह वै वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति'**। इति। (बृह. ३.१.९)

अत्रोपलक्षणत्वस्वीकारेऽनूचानविरोधः स्पष्ट एव। एवमेव पूर्वोदाहृतेषु सन्न्यासविधायकश्रुतिवचनेषु ब्राह्मणनिर्देशस्य नास्त्युपलक्षणत्वमिति सिद्धम्।

आह—मा भूदुपलक्षणत्वं ब्राह्मणशब्दस्य। योगव्युत्पत्त्या मुख्ययैव वृत्त्या विद्यासंयुक्तेषु त्रैवर्णिकेषु वर्तमानो भवतु। ब्रह्म अणति अवगच्छतीति ब्राह्मणः। एवं सति त्रैवर्णिकानां नास्ति सन्न्यासाधिकारे विरोध इति चेत्? न। 'योगाद् रूढिर्बलीयसी'ति न्यायेन योगेन रूढिबाधस्यानौचित्यात्। तत्रैव प्रवर्तते योगो रूढि र्यत्राब्धात्मिका। तत्रैव साऽलब्धात्मिका भवति यत्रासौ न सम्भवति। ब्राह्मणशब्दो जातिमपहाय न शास्त्रस्थैरन्यै र्वाऽन्यत्र प्रयुज्यते। एवं ब्राह्मणमातापितृजन्यसन्ततौ ब्राह्मणशब्दस्य प्रयोगाल्लब्धात्मिका रूढि र्योगाद् बलीयसी भवति। तथा च योगोऽपि यदि सम्भवति तदा ब्राह्मणजातावेव संगमनीयो नान्यत्र। रूढ्यसम्भवे हि योग आद्रियमाणो भवतीति 'प्रोक्षणीष्वर्थसंयोगात्' (मीमांसा १.४.९) इत्यत्र राद्धान्तितम्। अतो नास्ति ब्राह्मणशब्दस्य त्रैवर्णिके वृत्तिः। एवञ्च सन्न्यासे ब्राह्मणाधिकारितैव निश्चीयते। अत एव भगवतो वासुदेवस्य—

**'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'**। (गीता ३.२०)

इत्यनेन क्षत्रियभूतजनकादीनां सन्न्यासव्यतिरिक्तकर्मद्वारैव संसिद्धिप्रतिपादनं संगच्छते। इत्थमेव क्वचिन्निन्दादर्शनादेकदण्डिनामेकदण्डधारणमशास्त्रीयमेवेति भवत्प्रतिपादनमेव शास्त्रानाकलननिबन्धनमस्ति। बहुप्रकारा हि निन्दा शास्त्रेषु विलोक्यते। सर्वत्र तदुन्नीतो निषेधो न परिकल्प्यते। क्वचिदेव निन्दा प्रतिषेधं कल्पयति यत्र तस्याः प्रयोजनान्तरं नास्ति। यथा—शूद्रादीनां वेदश्रवणनिन्दा। प्रयोजनान्तराभिप्रायेण विधेयस्तावकतया वा प्रयुक्ता निन्दा न निषेधं परिकल्पयितुमलम्। 'अयज्ञिया वै जर्तिला गवीधुकाश्चे'ति जर्तिलगवीधुकाख्यधान्यविशेषनिन्दा

'पयसाऽग्निहोत्रं जुहोति'ति पयःप्रशंसार्थैव। एवमेव—'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा' इत्यत्र गवाश्वव्यतिरिक्तानाम-पशुत्वप्रतिपादनद्वारा निन्दा न गवाश्वव्यतिरिक्ताजादिप्रतिषेधार्था। कुतः? अजादीनां विहितत्वात् पशुकार्ये प्रतिषेधासम्भवात्। किन्तु पशुशब्दस्य गवाश्वशब्दाभ्यामेकवाक्यत्वेन सम्बद्धस्य तद्गतप्राशस्त्यलक्षकत्वं स्वीकृत्य नञा तत्पर्युदासः क्रियते। गवाश्वयो र्विद्यमानस्य प्राशस्त्यस्य तदन्येष्वभावात् तेषामप्राशस्त्यप्रतिपादनद्वारा गवाश्वगतप्राशस्त्यमेव प्रतिपाद्यते। इत्थमेव पूर्वोक्तप्रकारा एकदण्डधारणनिन्दा न तत्प्रतिषेधार्था भविष्यति। परमहंसादीनां शास्त्रेषु तद्विधानात् तत्प्रतिषेधासम्भवादेव। तद्विधानञ्च विष्णुस्मृतौ—

**त्रिदण्डं कुण्डिकाञ्चैव सूत्रं चाथ कपालिकाम्।**
**जन्तूनां वारणं वस्त्रं सर्वं भिक्षुः परित्यजेत्।।**
**कौपीनाच्छादनार्थन्तु वासोऽर्थस्य परिग्रहम्।**
**कुर्यात् परमहंसस्तु दण्डमेकं तथैव च।।** इति।

परमहंसानां त्रिदण्डादित्यागमाह काण्वायनोऽपि—

**'तत्र परमहंसा नाम त्रिदण्डकमण्डलुशिक्यजलपवित्रपादुकासन-शिखायज्ञोपवीतकपालानां त्यागिनो न तेषां धर्माधर्मौ न सत्यं नापि चानृतं सर्वसहा सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नभैक्षाहाराश्चातुवर्ण्यं भैक्षचर्यं चरन्त आत्मानं मोक्षयन्ते'** इति। शिष्टपरिगृहीतत्वेन प्रामाण्यान्नैतत्स्मृतिद्वयस्याप्यप्रामाण्यशङ्कालेशावतारोऽपि। अत एव श्रीमच्छतसाहस्त्रीसंहितायाम्—

**'एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा।**
**काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर!'।।**

इति श्रीमद्भगवतो व्यासस्यैकदण्डित्वादियतिप्रकारप्रतिपादनमपि सङ्गच्छते। यद्येकण्डधारणमशास्त्रीयं स्यात्तदा भगवतस्तथाप्रतिपादन-मप्यसंगतं स्यात्। एतेन दण्डशून्या अपि परमहंसाः सन्न्यासिनो भवन्तीति निश्चीयते। अन्यथा 'काषायमात्रसारोऽपी'ति वचो निरवकाशं भवेत्।

नन्वेवमपि त्रिदण्डादिधारणं निर्विषयं स्यादिति चेत्? न। हंसपरमहंसव्यतिरिक्तकुटीचकबहूदकसन्न्यासिविषयत्वात् तस्य। अयमभिप्राय:—

'चतुर्धा भिक्षवो विप्रा: सर्वे चैव त्रिदण्डिन:'। इति पूर्वप्रतिपादितदिशा सन्न्यासचातुर्विध्यमेव, न ततो न्यूनाधिक्ये। ते च चत्वार: सन्न्यासिन: क इत्यपेक्षायामाह हारीत:—

**'कुटीचको बहूदको हंसश्चैव तृतीयक:।**

**चतुर्थ: परमो हंसो यो य: पश्चात् स उत्तम:'।। इति।**

अत्रात्यन्ताशक्त: पुत्रादिनिर्मितकुटीमध्यास्ते गृह एव वा वसति स काषायं त्रिदण्डं च गृहीत्वा गृहबन्धुभोजी सशिखासूत्र: कुटीचक इति निगद्यते। बहूदकोऽपि तद्धर्मैव केवलं सप्तागाराणि भैक्षं चरन् भिद्यते। हंस: परमहंसश्च 'एकञ्च वैणवं दण्डं धारयेद् नित्यमादरादिति वचनात् पूर्वोक्तवेषोऽप्येकदण्डो भवति। त्रिदण्डिनोऽपि प्राप्तपरमसाम्यावस्था हंसा: परमहंसा वा भवन्ति त्रिदण्डत्यागादिति पूर्वोक्तवचनान्निश्चीयते। स दण्डोऽपि त्यज्यते ब्रह्मविज्ञाने सञ्जात इति—

**'न दण्डं न शिखां नाच्छादनं चरति परमहंस:'।**

इति महोपनिषद्वचनाद् 'ज्ञानमेवास्य दण्ड' इति वाक्यशेषाच्चावसीयते। त्रिदण्डत्यागैकदण्डग्रहणमुक्तं स्कन्दपुराणेऽपि—

**'कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम्।**

**अक्षमालाञ्च गृह्णीयाद् वैणवं दण्डमव्रणम्।।**

**परमहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम्।**

**शिखां यज्ञोपवीतञ्च नित्यकर्म च संत्यजेत्।।** इति।

एतत्तथ्यप्रतिपादनपराणि बहूनि वचनानि सन्तीत्याकरतोऽवगन्तव्यानि। एवञ्च हंसपरमहंसविषयेऽपि क्वचिद् दृश्यमानं त्रिदण्डवचनं वाग्दण्डादिविषयमेव पूर्वोक्तमिति ध्येयम्। तथा सति त्रिदण्डैकदण्डधारणस्य व्यवस्थिततत्वात् क्वचिदेकदण्डधारणनिन्दा क्वचिच्च सन्न्यासनिन्दैवाधिकारापेक्षयेति मन्तव्यम्। उपपद्यत एव

सन्न्यासानधिकारिणां क्षत्रियादीनां सन्न्यासनिन्दा परमहंसानधिकारिणाञ्चैक-दण्डधारणनिन्दा। न चैतावतैकदण्डधारेणमशास्त्रीयमिति गम्यते। तथा च महाभारते कर्णादिस्वजनवधनिर्विण्णमानसं सन्न्यासोद्युक्तं युधिष्ठिरं प्रति तद्भ्रातॄणां द्रोपद्या ऋषीणां भगवतो वासुदेवस्य च सन्न्यासनिन्दापराणि बहूनि वचनानि—

**'काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम्।**

**लिङ्गान्यन्नार्थमेतानि न मोक्षायेति मे मतिः'।।**

इत्येवमादीनि सन्ति, तानि सर्वाण्यपि क्षत्रियधर्मप्रशंसापराण्येव युधिष्ठिरं स्वधर्मे व्यवस्थापयितुम्। कुतः? ब्राह्मणानां कृते सन्न्यासाश्रमस्य विहितत्वात् तन्निषेधानुमानानुपपत्तेः। काषायलिङ्गधारिणोऽर्थार्थिनो वसन्त्येव केचनेति न तन्निन्दा निर्मूलैव।

एतदप्युक्तमेव—

**'जटाजिनधराश्चान्ये पङ्कदिग्धाजितेन्द्रियाः।**

**मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक्'**।। इति।

श्रीभासरचितप्रतिज्ञायौगन्धरायणे—

**'नाहं काषायं वृत्तिहेतोः प्रपन्नः'।**

इति यौगन्धरायणवचनमपि तदेव परिपोषयति।

अन्यत्राऽप्युक्तम्—

**'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः।**

**सन्न्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशयाः'।।** इति।

एतेनेतिहासे रावणकृतत्रिदण्डधारणनिर्देशोऽर्जुनकृततद्धारण-निर्देशश्च त्रिदण्डधारणस्यैव परम्पराप्राप्तत्वं शास्त्रीयञ्चेति गमयतीति केषाञ्चन विवल्गनमपास्तं वेदितव्यम्। धनञ्जयस्य परिव्राजकवेषपरिग्रहे यज्ञोपवीतादिसद्भावो राजगृहेषु चिरनिवासार्थित्वेन कुटीचकाद्यनुकरणाद् यज्ञोपवीताद्यत्यागेन कुटीचकाद्यनुकरणे सम्भवति क्षत्रियाश्रमविरुद्धेन तत्त्यागेन परमहंसाद्यनुकरणस्यानौचित्यादेव। एवं दशाननस्यापि। न हि

तेन संन्यासो गृहीत एव, अपि त्वनुकृतः। तथा च तस्य यज्ञोपवीतत्यागस्यानौचित्यमेव।

सिद्धमेतावता ग्रन्थेन सन्न्यासाधिकारो ब्राह्मणानामेव न क्षत्रियादीनाम्। ब्राह्मणेष्वपि पुंसामेव विशुद्धचरितानां न पतितानां स्त्रीणां वा। सन्न्यासोऽपि चतुर्धैव कुटीचकादिभेदेन यत्र कुटीचकबहूदकौ शिखासूत्रात्यागिनौ त्रिदण्डिनौ च, हंसपरमहंसौ तत्त्यागिनावेकदण्डिनौ च, क्वचिच्च सति ज्ञानोत्कर्षे दण्डादित्यागिनः परमहंसा इति।

एतच्छास्त्रोक्तमर्यादां परित्यज्य ये क्षत्रियाद्या अनधिकारिणः प्रव्रज्यापि दलविशेषमाश्रयन्ते ते सर्वे वृथाप्रव्रजिता इत्युच्यन्ते। तेषां कृतेऽयं श्लोको विलोक्यते प्रायश्चित्तमयूखे—

**'वृथा प्रव्रजितो यश्च सेतुभेत्ता च सूचकः।**

**आश्रमात् पतितो यश्च सोऽग्निज्वालं प्रपद्यते'।।** इति।

अग्निज्वालाख्यं नरकविशेषमित्यर्थः। सिद्धमेवं क्षत्रियादीनां सन्न्यासग्रहणे स्वधर्मध्वंसनिमित्तकपातित्यानुप्रवेश इति।

स्थितादुत्तरम्—

त्रैवर्णिकानां ब्रह्मचर्यं परिसमाप्य गार्हस्थ्यानुप्रवेशो यत्र ब्राह्मणानां तदुत्तरं कलौ सन्न्यास उत्कटवैराग्यसत्त्वे वा ब्रह्मचर्यादेव स इति सिद्धान्ते स्थाणाविवाचले विराजमानेऽपि क्षत्रियादीनां योग्यकन्यानुपलम्भे किं कुर्युस्त इत्यपेक्षायामुच्यत एव 'तदा कण्ठीं गृहीत्वा स्यु र्यथारूची'ति। अस्यायमेवाभिप्रायो यद् दारसंग्रहासम्भवे क्षत्रियादीनां तुरग इव ब्रह्मचर्यधारणमेव नैष्ठिकतया आपतति। सन्न्यासाभाव एव तत्र तेषां कृते कारणं नान्यदिति। तस्मिन् सङ्कटे कुटुम्बमध्येऽवस्थानस्य बह्वनर्थ-मूलकतया ते यथाकथञ्चिद् विरक्तमार्गमेवाश्रयेयुरित्यभ्यनुज्ञा शास्त्रकाराणां विलोक्यते। मठे तेषामवस्थानमेतेन सूचितं भवति। विना च काषायधारणं मठप्रवेशासम्भवात् मठप्रवेशाभावे च भोजनाच्छादनादिबाधासंप्लवे धर्मविप्लव इति वैष्णवनिकतने पीताम्बरधारणं सहैव शिखासूत्राभ्यां तथा तदन्यमठेषु सन्न्याससदृक्षं काषायधारणमपि निश्चीयते। स्वप्नेऽपि न दण्डधारणं त्रिदण्डधारणं वा। अस्मिन्नेव प्रसङ्गे—

'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहाद्'। इति कौर्माद्युक्ते निर्णयसिन्धावुदाहृताया गतिः परिकल्प्यते। एवं सति—

**चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः।**
**क्षत्रियस्य त्रयः प्रोक्ता द्वावेवेको वैश्यशूद्रयोः।।**

इति पूर्वोदाहृतवचनं विष्णो लिंङ्गनिवारणार्थमेव सिद्ध्यति। काषायदण्डादिकं विष्णो लिंङ्गम्। तद्धारणञ्च ब्राह्मणानामेव धर्मः। यथाह भगवान् बौधायनः—

**'मुखजानामयं धर्मो यद् विष्णो लिंङ्गधारणम्।**
**राजन्यवैश्ययो नेंति दत्तात्रेयमुने र्वचः'।।** इति।

नन्वेवं काषायस्यापि क्षत्रियाद्यविषयत्वात् कथमभ्यनुज्ञाऽस्तीत्युच्यते? उक्तमेतद् भोजनादिबाधासंप्लवप्रयुक्तप्राणसंकटे सत्येव तदिति। एतत् सर्वं क्षत्रियवैश्यविषयं दारसंग्रहासम्भव इति न प्रस्मर्तव्यम्। एतेन शूद्राणामपि कृते श्रीस्वामिनारायणेन कथं काषायवस्त्रधारणमभ्यनुज्ञातमिति सुधियो दरमुकुलितलोचनं विदाङ्कुर्वन्तु। मम तु लोभ एव तस्य प्रतिभाति। स्वकीयसम्प्रदायवैलक्षण्यप्रदर्शनमेव लोभः। लोभादिहेतुसत्त्वे नास्ति आचारस्य धर्मत्वमिति 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इत्यनेन भगवाञ्जैमिनिराह। एवमन्यत्रापि द्रष्टव्यम्।

**प्रयोजनन्तु पूर्वोत्तरपक्षाभ्यामेव सुस्पष्टमिति यथायथमूह्यम्।**

**।। इति पातित्यपेटिकायां द्वादशं व्यवस्थया आश्रमधर्मस्वीकरणाधिकरणम्।।१२।।**

●

## अथ त्रयोदशं परिगृहीतब्रह्मचर्यादिधर्माणामेव विदुषां संन्यासाधिकाराधिकरणम्

स्थित स्तावद् ब्राह्मणानामेव सन्न्यासविधिः। अतः परं विचार्यते— किमस्वीकृतब्रह्मचर्याश्रमा आधुनिकशिक्षाप्रभावपरिपोषिता वयोविशेष-स्वीकृतसरजस्कपत्नीका अधिवक्तृन्यायाधीशाभियन्तृचिकित्सकलेखक-तत्तत्पदासीनाधिकारिसेवकप्रभृतयो म्लेच्छवेशधरा स्तिष्ठन्मूत्रका येन केनाप्युपायेन धनार्जनव्यापृतमानसा बहुकुतर्कव्याकुलितचेतस स्तेऽपि समासादितविभवैः कौटुम्बिकान् परिपूर्णान् विधाय सेवाविमुक्ताः प्रव्रजेयुरुत नेति। किन्तावत् प्राप्तम्?

ते सर्वे प्रव्रजेयुरिति। कुतः?

ब्राह्मणत्वाविशेषेण वार्धके कारणेष्विह।
उपस्थितेषु सन्न्यासं को निवारयितुं क्षमः।।१।।

सेवाकालेऽपि सेवातः प्राप्तव्ये विपुले फले।
दारादिकं परित्यज्य ग्राह्यः सान्न्यासिको विधिः।।२।।

मठाध्यक्षपदेनैव लभ्यते विभवादि यत्।
तेनैव परिवारस्य विभुता वृद्धिमेष्यति।।३।।

सन्न्यासिनां प्रकारेषु सर्वेष्वेवंविधा जनाः।
ब्राह्मणत्वं पुरस्कृत्य परिपुष्टप्रभावतः।।४।।

सन्न्यस्ताः परिदृश्यन्ते प्रतिष्ठामाप्नुवन्ति च।
कपोलकल्पिताध्यात्मकथामपि प्रकुर्वते।।५।।

तस्माद् वेदबहिर्भूता ब्राह्मणा अपि सर्वतः।
परिवारपूर्णतां कृत्वा संन्यस्यन्त्वितिगम्यते।।६।।

साऽवस्थाऽवश्यम्भाविनी जनस्य यस्यां शूद्रोऽपि मान्यतां व्रजति। किं बहुना? कुलटा अपि कौशेयधारिण्यो विचित्रतिलकाञ्चिता: समादरणीयतां भजन्ते। सा प्रसिद्धा जरावस्थैव लोके चकास्ति। तत्र ब्राह्मण: पुनरस्वीकृतब्रह्मचर्याश्रमोऽकृतवेदोदितकृत्यो वा क्वचिद् विगर्हिताचरितोऽपि कथन्न भूलोके माननीयतां व्रजेत्। यदि वार्धके सन्न्यासग्रहणकारणव्रातभूतानि पत्नीविक्षोभपुत्रादिकर्तृकताडनसंन्यास-प्रयुक्तविशेषपूजामठारामविस्तारप्रभृतीनि काकतालीयन्यायेनोपनिपतन्ति प्रधानामात्य-पदलाभाय सर्वसांसदोद्योगपतिसमर्थनमिव तदा तेषां सन्न्यास: कथन्निवारयितुं शक्येत। विपुलफलाप्तये तु सेवाकालेऽपि दारादिकं परित्यज्य सन्न्यासग्रहणमेवोचितं प्रतिभाति। उभयफलसिद्धे:। मठाध्यक्षपदं तथा तत्प्रयुक्तप्रतिष्ठादिकं तदर्जितविभवै: परिवारस्य परिपूर्णता च कुत्र यास्यति। सर्वेष्वेव सन्न्यासिप्रकारेषु जजस्वामिवकीलस्वामिडाक्टर-स्वामिसंज्ञाभाज: स्वोचितमेव कर्मजातं सम्पादयन्तो दरीदृश्यन्ते मठेषु। का तत्र विरागप्रभृतियतिधर्मव्यपेक्षा? सर्वप्रकारमेव तेषां प्रतिष्ठा भक्तव्रातेषु विवर्धत एव कान्तकरतलसंस्पर्शविवर्धमानं कान्ताकुचकलशयुगलमिव प्रवचनादिना। एवञ्च वेदादिशास्त्रज्ञानबहिर्भूता अपि ब्राह्मणा: पूर्वोक्ता: परिवारजातं विभवतृप्तं विधाय सन्न्यासं परिगृह्णन्त्विति प्राप्ते—

ब्रूम:। नास्ति पूर्वोक्तप्रकाराणां सन्न्यासविधिरिति। कुत:?

**येषामकरणाच्छास्त्रे निन्दा सर्वत्र दृश्यते।**
**शपथेष्वपि तत्पापं पुराणेषु च गृह्यते।।७।।**

**तच्छास्त्राभ्यसनं पूर्वं न कृतं यै गुरो: कुले।**
**नापि सम्पादितं कृत्यं गृह्यं सर्वं गृहेष्वपि।।८।।**

**निर्युक्तिकै र्विचारै स्तु भीषणै र्भोगभूषितै:।**
**आक्रान्तं मानसं येषां भोगसम्पादनात्मनाम्।।९।।**

**ब्राह्मणानां कुले तेषां जातानामपीह वै।**
**कथं सन्न्यासधर्म: स्यादपवर्गफलोन्मुख:।।१०।।**

सन्न्यासः प्रायशो लोके तेषामेव सुशोभते।
ब्रह्मचर्याश्रमे यै स्तु शास्त्रसम्पत्तिरर्जिता।।११।।

येषां कार्पण्यदोषोऽपि शशशृङ्गायितो भवेत्।
दानादिधर्मवर्गश्चानुष्ठितो यैः पुनः पुनः।।१२।।

वसन्ततिलकावृत्ते तेषामेव महात्मनाम्।
गुणानुकीर्तनं कुर्वे तद्गुणाकृष्टमानसः।।१३।।

आजन्मनः श्रुतिपरम्परया चरित्रं
रक्षन्ति येऽनुदिवसं न वसन्ति येषाम्।
चित्ते च कर्मणि दुराचरणानि भूय-
स्तेभ्यो नमः सततमस्तु ततः परं किम्।।१४।।

येषां वचःसु च मनःसु तथा वपुःषु
सुश्लाघनीयरमणीयपदार्थजातम्।
सन्तिष्ठते गुणिषु सद्गुणवासनेव
जीवन्ति ते भुवि नरा न च तेऽपि येऽन्याः।।१५।।

वाचि प्रभूतमधु तिष्ठति सुप्रतिष्ठं
कर्मण्युदात्तपदवी किल भाति शुभ्रा।
शान्तान्तरे सकललोकविभूतिकान्ति-
र्येषां त एव कृतिनः पुरुषाः पृथिव्याम्।।१६।।

दुर्भागधेयकटुताकुलितैरपि द्राग्
यैरेव धर्मसरणिः परिपाल्यतेऽत्र।
तेषामुदात्तचरिताकलितान्तराणां
दासीव भूतिरतुला चरणौ बिभर्ति।।१७।।

लोकैकधामचयनाय वसुप्रहाणं
तत्र स्वकीयविभुतायतिदृष्टिदानम्।
भिन्नाभ्रखण्डमिव दृश्यजगत्सु भानं
सर्वं विलक्षणतया सुधियां प्रमाणम्।।१८।।

ये वै विंशुद्धकुलसन्ततिसुप्रयुक्त-
गर्भक्रियादिभिरहो जनिमाप्नुवन्ति।
ते दुष्प्रवृत्तिजविकारभरं विधूय
श्रौतीं विभां सुमनसो भुवने किरन्ति।।१९।।

एतद्गुणविहीनानां धर्माद् वैराग्यशालिनाम्।
प्रसङ्गतो गुणः सर्व स्तद्वृत्तेनैव कथ्यते।।२०।।

धर्मज्ञशुभ्रसमयः श्रुतिवत् प्रमाणं
तं हेलया वसुनिमित्तकमुत्सृजन्ति।
ये ते नराः सपदि भौतिकचाकचिक्य-
प्राप्तादराः किमपि तत्त्वमवाप्नुवन्ति?।।२१।।

गोष्ठ्यां गदन्ति गरलं खलु येऽमृताभं
कुर्वन्ति कुत्सितकलाकलितञ्च कर्म।
ते मानसागतमपि श्रुतमुत्त्यजन्तो
मातङ्गभक्षितकपित्थतुलां व्रजन्ति।।२२।।

ते वै वृथापरिगृहीतविरक्तवेशाः
स्वार्थानुरक्तवटुकाः प्रबलाः कुचोद्ये।
ये ब्राह्मणानपि वरान् धृतसर्वविद्यान्
दण्डेन कन्दुकमिवाशु समुत्क्षिपन्ति।।२३।।

ते नूनमेव विपुलोदरपोषणार्थं
गृह्णन्ति पञ्च वटुकान् गृहकोण एव।
ये श्रेष्ठिलब्धघृतपानरता धरायां
मूर्खांश्च तान् विदधतः पुनरुत्त्यजन्ति।।२४।।

व्याघ्रस्य कङ्कणवत श्चरितञ्च सर्वं
दुर्वृत्तवृत्तमभितः परिशीलयन्ति।
सङ्कल्पमेव मरणस्य विभाषमाणा
ये ते सुहृत्तमजनानपि तर्जयन्ति।।२५।।

धिक् तान् शठोत्तमखलानधमान् त्रिजातान्
धिग् माधवाश्रमपरानपि धूर्तराजान्।
तान् धिक् पुनः पुनरपि प्रबलश्रिता ये
दुःशासनादिकमपीह कदर्थयन्ति।।२६।।

जाग्रत्प्रबोधनयशालिमहात्मनाञ्च
ये ग्रन्थरत्नमरमत्र विदूषयन्ति।
ते च्छद्म नाम ददतो भुवि गुह्यमुक्तं
कोला इवाशु मलमाददते मुखेन।।२७।।

श्रोत्रप्रियाः सपदि चारु गिरो गृणन्ति
कृन्तन्ति तीक्ष्णचरिता स्तदनु प्रमुग्धान्।
अन्धाः स्वकार्यकरणे परितः प्लवन्ते
निःश्रेयसाय किमहो मशका खलाश्च।।२८।।

अश्नन्ति यद्विधमतीव विकारजातं
तादृक्प्रकारमनिशं द्रुतमुत्सृजन्ति।
मार्गे समेऽपि कुटिलं बहुधा चरन्तो
गण्डूपदा इव विभान्ति खलाः पृथिव्याम्।।२९।।

एते शठोत्तमविधाकलितान्तरङ्गा
दीर्घीभवद्दुरितसिन्धुचलत्तरङ्गाः।
तुर्याश्रमेऽपि विदलद्विनयप्रसङ्गा
भृङ्गा भवन्ति विषयेषु ललत्तिभङ्गाः।।३०।।

निःश्रेयसेन कुधियां भवतीह कोऽर्थो
धर्मादपेतमनसां ननु भोग एव।
सिद्धिः परा विभवरागजुषां खलानां
घासात् परं न हि खरस्य किमप्यभीष्टम्।।३१।।

तिग्मैषणाप्रचयभाक्त्वमहो प्ररुढ-
दुर्वासनाद्रुमबलेन विभाव्यमेषाम्।
धर्माधिकारमधिगत्य यतः किलैते
तद्दूषणाय बहुधा विपुलीभवन्ति।।३२।।

सम्पादितैकविभवा अपि धर्महेतोः
कापर्दिकं व्ययमहो न लषन्ति दुष्टाः।
मैरेयमांसगणिकादिविलासभूमौ
भूयोऽर्थराशिमभितश्च किरन्ति तुष्टाः।।३३।।

चित्रप्रकारसचिवै र्विविधैरुपायै-
रात्तश्रियः प्रियकलत्रसुतादयो ये।
स्वप्नेऽपि यत्कृतिरभून्न परोपकारे
ते स्युः कथं मुनिजनोचितधर्मभाजः।।३४।।

मध्येऽपि सन्ति विदुषां बहवः खला ये
विद्यामिषेण दुरितान्यपि गोपयन्ति।
तेषां कृते च निगमा निगदन्ति यद् यत्-
तत्तद्विरुद्धचरणाः किल ते भवन्ति।।३५।।

अध्यापने श्रुतिगिरामिह ये नियुक्ता
म्लेच्छादिवेशरसिका विशिखा स्त एव।
दुर्भोज्यजातमपि ये मुहुरुच्चरन्तो
खादन्त्यखिन्नमनसोऽभ्युदयाय कि न्ते?।।३६।।

एके त्रिपुण्ड्रकविधाविलसल्ललाटा
म्लेच्छाद्यपत्यमभिवादयितुं प्रयान्ति।
प्राप्तादरा स्तत इतः प्रसृतात् कुजातेः
सम्मानपत्रमुपगृह्य वितर्कयन्ति।।४०।।

राष्ट्रोन्नतिः कथमितीह विचारशून्य-
स्वान्ता भ्रमन्ति भुवने विभवैकहेतोः।
संसर्गिणो जलनिधे स्तरणप्रसक्ता
धर्मज्ञधर्मसरणिञ्च विगर्हयन्ति।।४१।।

द्रव्यं दरिद्रधिषणावलिसङ्गतानां
लक्ष्यं परं हि विदुषामपि यत्कृते ते।
नीतिप्रकारसरणिं समुपेक्षमाणा-
श्चाटूक्तिपूर्तिपरमा अधमान् श्रयन्ते।।४२।।

यद्यप्यमीषु कृपणेषु मुधाव्ययो न
स्थानं ग्रहीतुमलमस्ति तथापि तेऽपि।
पुत्रादिकान् भृतिषु कारयितुं प्रभूत-
मुत्कोचराशिमधमेषु निधापयन्ति।।४३।।

दैवाद् नियोजनविधावधिकारभाजः
स्यु स्ते तदोत्तमगुणानवधीरयन्ति।
उत्कोचराशिमधिगम्य पटुप्रमूढा-
नभ्यर्हितेषु च पदेषु नियोजयन्ति।।४४।।

यत् कर्म मूढमनुजेष्वपि नातिशोभि
विद्वत्खला स्तदपि सत्त्वरमाचरन्ति।
एते प्रभावपिशुना हि मुधा द्विजानां
प्राप्तव्यमर्थनिचयं विनिवारयन्ति।।४५।।

मात्सर्यदुर्गुणविसारितहृद्विकल्पा
अल्पासवो नर इमे बटुकप्रधानाः।
तीव्रं विवादमुपयन्ति यतः स्वरूपा-
नन्देऽपि माधवपराः प्रबलाश्रयत्वात्।।४६।।

हृद्या गिरो निजसमीहितसाधनाय
यद्यप्यहर्निशमिमे ब्रुवतेऽतिरूक्षाः।
कार्यं तदेव दुरितोपचितं विधाय
शिष्टानपि च्छलयितुं प्रभवन्ति दक्षाः।।४७।।

एतेषु विद्वदवरेषु मदान्धजारा
जाताः स्वयं सुमनसो हृतनीचदाराः।
ते नूनमेव विहिपादिदलाश्रयेण
च्छिन्दन्त्यनादिनिगमोदितधर्मधाराः।।४८।।

द्रव्येण दिक्षु विनियोजितदुर्दलालाः[१]
श्रौतीं विधां दलयितुं कटुकर्मजालाः।
भ्रष्टाः सदाचरणतोऽनधिकारिसिद्धा
गृद्धा भवन्ति विषयामिषभोगरुद्धाः।।४९।।

यद्येवमस्ति मतयो गतयश्च दुष्टा
मुष्टात्मना न्नु दुरदृष्टबलेन पुंसाम्।
सन्न्यासभाज इह ते स्युरिति प्रजल्पन्
लज्जोदधौ न कथमेति विचारमूढः।।५०।।

एवं विरक्तगणमध्यहतात्मतत्त्वा
वेदादिशास्त्रनिधिदूषणदुष्टसत्त्वाः।
सञ्चारयन्ति कटुकान् वटुकान् विमूढान्
आचारसेतुदलनाय बहि र्विरूढान्।।५१।।

सन्न्यासाश्रमेऽधिकारितावाप्तये यथाशास्त्रं ब्रह्मचर्यपरिग्रहो नियतः। पुराणेषु तदपरिग्रहीतुः पापश्रवणात्। तथा हि हेमाद्रौ ब्रह्माण्डे—

'द्विजो भूत्वा तु यो व्याध! वेदभ्रष्टोऽभिजायते।
स्वाध्यायसन्ध्यारहितः सत्यशौचविवर्जितः।।

---

१. दलमलन्तीति दलालाः।

अविक्रयाणां विक्रेता अयाज्यानाञ्च याजकः।
तेन पापेन लिप्यामि नागच्छामि पुन र्यदि।।
कृतघ्ने च कदर्ये च नास्तिके वेदनिन्दके।
परपैशुन्यसक्तेऽपि कन्याविक्रयकारके।।
परापवादसन्दुष्टे सर्वधर्मबहिष्कृते।
वृषलीपतौ च यत्पापं मातापित्रोरपोषके।।
हैतुके वकवृत्तौ च श्राद्धतीर्थविवर्जिते।
एतेषां पातकं मह्यं नागच्छामि पुन र्यदि।। इति।

महाशिवरात्रिव्रतकथायां व्याधं प्रति मृग्या एतानि शपथवचनानि। एवमेव तत्पतिभूतेन मृगेणापि कृताः शपथास्तत्रैव विलोक्यन्ते। तथा हि—

'प्रवासशीला ये विप्राः क्रयविक्रयकारिणः।
सन्ध्यास्नानविहीनाश्च वेदशास्त्रविवर्जिताः।।
मद्यपाः स्त्रीसमासक्ताः परनिन्दारता स्तथा।
परस्त्रीसेवका नित्यं परपैशुन्यसेवकाः।।
शूद्रान्नभोजकाश्चैव रसविक्रयकारकाः।
तेन पापेन लिप्यामि नायामि यदि ते गृह्यम्।।
विप्रवाक्यं परित्यज्य पाखण्डाभिरतास्तथा।
तेन पापेन लिप्यामि यदि नायामि ते गृहम्।।
शूद्रान्नेषु सदा सक्ताः शूद्रसम्पर्कदूषिताः।
सन्ध्याभ्रष्टा श्च ये विप्रा दातुश्चैव निवारकाः।।

एतै र्वचनै स्तदेव निश्चीयते यत् सिद्धान्तयुक्त्या प्रसाधितम्।

न खलु मयैव निर्धारितोऽयं पक्षः पूर्वं धृतब्रह्मचर्याणां शास्त्रज्ञानां समासादितश्रुतिस्मृतिसदाचारशिष्टात्मतुष्टिप्रसाधितधर्माणामुदारमानसानां कार्पण्यदोषविरहितस्वान्तानामेव विरक्तानां महापुरुषाणामपवर्गप्रयोजकः

सन्न्यासाश्रम इति, अपि त्वस्मदाचार्यैरपि सम्यक् प्रदर्शितः। तथा हि शास्त्रदीपिकायां पार्थसारथिमिश्रा आहुः—

'जन्ममृत्युजराव्याधिदुःखान्यनुदिनं नृणाम्।
स्वयमेव विना यत्नाद् निपतन्ति सहस्रधा।।

विहिताकरणान्नित्यं प्रतिषिद्धनिषेवणात्।
महदामुष्मिकं दुःखं यन्नाम स्वल्पकं सुखम्।।

सुरापानादिसुखवत् वर्जनीयं विवेकिनाम्।
एवम्भूतेऽपि संसारे ये रक्ताः सुखतृष्णाया।।

न तेषामधिकारोऽस्ति मुक्तिशास्त्रे कथञ्चन।
संसारादुद्विजन्ते ये दृष्टलोकपरावराः।।

त एव खलु मुच्यन्ते न तु यः प्राकृतो जनः।
तेषामेवापवर्गाख्यः पुरुषार्थो महात्मनाम्।। इति।

एतेन पूर्वपक्षिणोद्भावितानि सन्न्यासे कारणजातानि निरस्तानि वेदितव्यानि। न हि पत्नीविक्षोभप्रभृतीन्येव सन्न्यासकारणानि। कि न्तर्हि? ब्रह्मचर्याश्रमे नियमपूर्वकार्जितशास्त्रसम्पत्ति गार्हस्थ्ये नित्यनैमित्तिक-कर्मानुष्ठानसमृद्धिः पूर्णतो विरागश्च। येषामेते सन्ति त एव विरक्ताश्रमप्रवेशार्हा नान्यः कश्चिदपरः संसाराकृष्टमानसः। आधुनिक-शिक्षाप्रभावितान्तराः परिगृहीतप्रौढशिक्षितमहिला मा भूवन् कदाचारसंस्पृष्टा स्तथापि ते पुरुषार्थेषु नाधिक्रियन्ते। एतेषां शास्त्रेषु दोषस्मरणात्। तथा च रजस्वलावस्थापन्नप्रौढमहिलापरिग्रहे दोषमाह भगवान् यमः संस्कार-मयूखे—

'यस्तां समुद्वहेत् कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः'।। इति।

कामजवृत्त्या पुरुषान्तरेण संस्पृष्टा स्वयमेव वा मन्मथाकृष्टमानसा सङ्गता कथमुद्वाहार्हा कन्या स्यात्? उद्वाहितापि वा कथं धर्मसम्पत्करी भवेत्। प्रौढशिक्षाकेन्द्रेषु च पुरुषाः स्त्रियश्च विगलितान्योन्यप्रभेदं परिगृहीतपरस्परसाहाय्यमनुशीलयन्ति शिक्षाजातं यत्र विलक्षणहास्य-

विनोदप्रभृतयो दृश्यन्त इति नाविदितं संस्कारितमानसानाम्। देशैककोणाद् देशान्तरकोणमाश्रयन्ति प्रौढा युवतयः पुरुषसुहृद्-व्यतिकरविवर्धितसकलापघानाः। कथमेता धर्मानुरागसचिवैः कुलीनैः परिग्राह्या इति विदाङ्कुर्वन्तु दरमुकुलितलोचनं विपश्चितः। तथा च पूर्वोक्तानां नास्ति संन्यास इति गम्यते। किञ्च संन्यासपरिग्रहेऽपि यस्य वेदाभ्यासस्यावश्यकर्तव्यतामाह भगवान् मनुः स कथमगृहीतब्रह्मचर्येण जनेन शक्यसम्पादनः। यदुक्तं विभवपरिपूर्णं कुटुम्बं विधाय सन्न्यासपरिग्रहः कार्य इति, तत्रोच्यते—विप्रतिषिद्धमेतत्। कुतः? यथाशास्त्रार्जितसम्पत्ते र्दानानन्तरमेव संन्यासपरिग्रहस्य स्मर्यमाणत्वात्। यथाह योगी याज्ञवल्क्यः—

**'वनाद् गृहाद् वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्।**
**प्राजापत्यान् तदन्ते तानग्नीनारोप्य चात्मनि।।**
**अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।**
**शक्त्या च यज्ञकृन् मोक्षे मनः कुर्यात्तु नान्यथा'।।** इति।

आह—यथाशास्त्रन्यायार्जितसम्पत्तिदानं विहितमित्यन्यायार्जित-सम्पत्त्या कुटुम्बविभवपरिपूर्णता न विरुध्येत? नैतत् सारम्। तादृक्संपत्ते र्नरकप्रयोजकत्वात्। एतेन सेवामध्येऽपि सन्न्यासः, विभवस्य सन्न्यासमाध्यमेन सम्पादनीयत्वादिति पूर्वपक्षिप्रजल्पनं वलभीतो भूमौ निपतितं कूष्माण्डमिव खण्डितं ज्ञेयम्। न हि परिवारविभवपरिपोषणं नाम यतीनां कार्यमस्ति। प्रारब्धवशापन्नमपि तद्धनं वेदादिशास्त्र-सम्पत्परिवर्धनार्थमेवेति न तत्परिवारोपभोगाय तद् भवति। एतेन मठमभितः पारिवारिकजनसंनिधापनं तेष्वन्यतमं वा यतिदीक्षापुरःसरं मठाध्यक्षतासम्पादनं यतिधर्मविरुद्धमेव न केवलम् अपि तु कल्पस्थायिनरकसंचयार्थमित्यकार्यमेव तद् यतिप्रवरैः। अतो नास्ति तेषां सन्न्यास इति।

अत एव को धर्मः सन्न्यासिनामित्यपेक्षायामाह पराशरः—

**'एकाकी निःस्पृहस्तिष्ठेन् न केनापि सहालपेत्।**
**दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः'।।** इति।

तेषां कियान् परिग्रह इत्याहात्रि:—

**'कौपीनाच्छादनं वासः कन्था शीतनिवारिणी।**

**पादुके चापि गृह्णीयात् कुर्यान् नान्यस्य संग्रहम्'**।। इति।

अत्र केचिदेवं परिचोदयन्ति—द्वेधा हि सन्न्यासिनां परम्पराऽनादितः सम्प्रवृत्ता आसीदिदानीमपि सा प्रचलति। एका राजर्षिपरम्परा यस्यां महेन्द्रस्पर्धिविभवव्यवस्था राजतादिसिंहासनारूढता च। अन्या ब्रह्मर्षिपरम्परा यस्यां सर्वस्वत्यागात्मिका पूर्वोक्ता व्यवस्थेति। एवञ्चात्राधिकरणे प्रोक्ता अगृहीतब्रह्मचर्याश्रमधर्माण आधुनिकशिक्षा-प्रभावितान्तरा विभवादिनिगृहीतमतय एषणात्रयभाजोऽपि राजर्षिपरम्परायां विराजितुं शक्नुवन्ति। अतो वैध एव तेषां सन्न्यास इति।

नैतत् सर्वमत्यन्तमूढजनस्यापि सन्तोषाय प्रभवति। विषयव्यग्रचेतसां वेदादिशास्त्ररामायणमहाभारतादीतिहासानुशीलनविधुराणां लोके कदाचार-व्यवस्थापनपराणां निजविषयोपभोगसमर्थनाय कुतर्कव्यासक्तं वाक्छर्दनमेवैतत्। कतिपय एव तथाविधा महापुरुषाः सन्ति ये यथाशास्त्रमुपदिशन्ति। न च ते स्वाचरितशास्त्रविरुद्धकर्मजातसमर्थनाय शास्त्रीयत्वं तस्य समर्थयन्ते। बहुसंख्याका स्तथाविधा एव भवन्ति ये प्रमादादात्मनः स्खलितं शास्त्रीयत्वेन समर्थयन्ते। समुद्रलङ्घनकर्तार आरुढपतितादय श्च यथा। राजशब्द श्च क्षत्रियजातौ रूढ इति मीमांसायामवेष्ट्यधिकरणे प्रपञ्चितम्। इतिहासपुराणादौ तस्यैव क्षत्रियस्य राजर्षिशब्देन व्यवहारो दृष्टो यो हि सकलश्रुतिप्रोक्तधर्मव्यासक्तो यथाशास्त्रं प्रजापालनेऽपि व्यवस्थितः। एवं ब्रह्मर्षिशब्दोऽपि सकलधर्मव्यासक्तचेतसि ब्राह्मण एव। तथा च सन्न्यासिप्रकारेषु नोक्तव्यवस्था सिध्येदिति व्यर्थ एव पूर्वोक्तानां सन्न्यासधर्मव्यवस्थापनप्रयास इति सिद्धं प्रगृहीतब्रह्मचर्याश्रमाणां शास्त्रज्ञानामेव सन्न्यास इति।

प्रयोजन न्तु कल्पस्थायिनरकप्रयोजकवृथाप्रव्रजितदोषाभावः पूर्वपक्षे सिद्धान्ते तु तत्सत्त्वमिति।

**।। इति पातित्यपेटिकायां त्रयोदशं परिगृहीतब्रह्मचर्यादिधर्माणामेव विदुषां सन्न्यासाधिकाराधिकरणम्।।१३।।**

# अथ चतुर्दशं त्रिजातपदार्थविवेचनाधिकरणम्

'धिक् तान् शठोत्तमखलानधमान् त्रिजातानि'ति खलवर्णनप्रसङ्गे समागतत्रिजातपदार्थविवेचनार्थमिदमधिकरणमारभ्यते। ननु शब्दानां तत्तद्वाच्यत्वस्य लोकसिद्धत्वाद् व्यर्थमेतदधिकरणमिति चेत्? न। लोकसिद्धत्वेऽपि केषाञ्चन शब्दानां वाच्यत्वस्य विवादाध्यासित-त्वेनाधिकरणारम्भस्य सार्थक्यात्। एवमेव सम्परेतार्थकत्वेन लोके प्रयुज्यमानस्यापि व्यापन्नशब्दस्य 'व्यापन्नमप्सु प्रहरति' इति वेदे दृष्टस्यार्थविवेचने महर्षे जैमिनेः प्रवृत्तिः सङ्गच्छते। आर्यम्लेच्छपिकनेमाधि-कारणान्यनेनैवाभिप्रायेण लब्धसत्ताकानि भवन्ति। यद्यपि व्याकरणेन सन्देहविषयतामुपगतानां केषाञ्चन शब्दानां मीमांसान्याय-समाश्रयणबलेनार्थविशेषावधारणं सम्भवति। यथा आदित्यशब्दस्य 'आदित्यः प्रायणीयश्चरु र्भवति' इति वेदे समागतस्य। आदित्यो देवता अस्य अदिति र्वा देवता अस्येत्युभयथापि आदित्यशब्दो निष्पद्यते। प्रथमे 'हलो यमां यमि लोपः' इत्यनेन यकारलोपस्मरणात्। प्रकृते का देवतेति समपेक्षायां 'सन्दिग्धे तु वाक्यशेषादिति न्यायबलेन 'अदितिमोदनेन' इति वाक्यशेषात् अदिति र्देवताऽत्र नादित्य इति निश्चीयते। अनेनैव वाक्य-शेषेण अवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वरूपाद् भक्ताद् भिन्नरूपः अनवस्रावितान्तरूष्मपक्कतण्डुलप्रकृतिकत्वरूपश्चरुरपि न स्थालीवचन इति निर्णीतो दशमे। नैवं व्यापन्नशब्दः केनचिदपि न्यायेन अर्थविशेषेऽवधार्यते। अत एव भगवाञ्जैमिनिः षष्ठेऽध्याये पञ्चमे पादे षोडशाधिकरणे—'व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत् प्रतीयेत' इत्यनेन केशकीटादि र्व्यापन्नपदार्थ इति सिद्धवदुपदिशति। आज्यादिषु विद्यमानस्य तस्य जले प्रक्षेपरूपं प्रायश्चित्तं विधिना विधीयते। लौकिकहोमेऽपि तस्यातिदेशः कर्तुं शक्यते। एवमेव त्रिजातशब्दस्यापि स्थितिः। अत स्तदर्थविचारायाधिकरणारम्भो युक्त एव। अत्र केचिद् यौगिकत्वेन त्रिजातशब्दं व्यवस्थापयन्ति त्रिभिः पुरुषैरेकस्यामेव योषिति

जात स्त्रिजात इति। नातीव रुचिकरोऽयं पक्षः। एकस्या योषितः पुरुषत्रयसम्बन्धे सत्यपि तद्गर्भस्यैकपुरुषमात्रबीजसमुत्थत्वात्। न ह्यनेकेषां बीजानामेकगर्भनिमित्तत्वमायुर्वेदादौ श्रूयते। अतो यस्य गर्भस्यानियत-निमित्तकत्वं पुरुषत्रयसम्पृक्तत्वाद् योषितः, तस्माज्जातस्त्रिजात इति। अयमपि पक्षो न विद्वद्मनांस्यावर्जयति। गर्भस्यानियतनिमित्तकत्वेऽपि कदाचित् तत्पत्युरपि सम्भवात्। न हि पुरुषान्तरसम्बन्धसत्त्वेऽपि पत्याहितबीजस्य गर्भस्यानादरणीयता लोके दृश्यते। पुरुषान्तरसम्बन्धो हि विगर्हणीयो भवति योषितः, न निजपाणिग्रहीतुरेव जायमाना सन्ततिः। एवञ्च त्रिपु मध्ये निजपाणिग्रहीतृव्यतिरिक्तपुरुषाज्जात स्त्रिजात इति परिशेषाल्लभ्यते। तथा च पङ्कजादिशब्दवल्लोके योगरूढस्त्रिजातशब्द इति प्रतिभाति। अस्मिन्नपि पक्षे नारीजातेरपमानोऽवश्यम्भावीति मत्वा रूढिं स्वीकुर्वन्ति न्यायतत्त्वविदः। संस्काराभावप्रतिषिद्धतिथि-नक्षत्रजातत्वकुलादिदोषप्रयुक्तेषु कदाचारेषु प्रवर्तमाना ये पुरुषा भवन्ति त एव त्रिजाता इति स्थितम्। परिकरश्लोका श्चात्र भवन्ति—

**ये दुर्दम्भबलेन चण्डचरिताधाराधमा दुर्मुखा**
**भूयिष्ठानपि मानवान् श्रुतिपथात् प्रच्यावयन्ति ध्रुवम्।**
**शास्त्रादौ खलु ये शठा निगदिताः पाखण्डिनो हैतुका-**
**स्ते वामा हतवृत्तयः खलधियः सर्वे त्रिजाताः स्मृताः।।१।।**

**ये साधूनपि पीडयन्ति पिशुनाः पापै श्च पूर्णान्तरा**
**मिथ्यारोपसुदुष्प्रकारकटुताक्रीडत्क्रियाकुण्ठताः।**
**बाह्याडम्बरवैभवैश्च समतासाम्राज्यमातन्वते**
**ते धूर्ता धृतिधर्मकञ्चुकवृताः सर्वे त्रिजाताः स्मृताः।।२।।**

**भीमासीमदुरोदरोदरदरीपोषाय येषां कृति-**
**र्येषाञ्चैव हलाहलाहितमुखोच्छ्वासै र्विदीर्णासवः।**
**संप्लुष्टा इव हृष्टधृष्टदहने सीदन्ति वै साधव-**
**स्ते दुर्दान्तदलानुरक्तमतयः सर्वे त्रिजाताः स्मृताः।।३।।**

ये सच्छास्त्रविदूषणाय कपटप्रोतञ्च हास्यास्पदं
ग्रन्थाभासमलं लिखन्ति च परं गूहन्ति नाम स्वकम्।
ये चैवञ्चरणा अपि स्फुटबहिःशिष्टप्रचाराः सदा
तेऽहे र्निर्ल्यवनीनिभा इभदृशः सर्वे त्रिजाताः स्मृताः।।४।।

क्षुद्रस्वार्थविवर्धनाय पतितारामेषु ये भुञ्जते
ये दुष्टानपि पातकेषु रसिकान् स्वस्मिन् दले चिन्वते।
ये धर्मादिविचारणैककुशलान् शिष्टाँश्च धिक्कुर्वते
ते वर्णाश्रमधर्मवर्जनपराः सर्वे त्रिजाताः स्मृताः।।५।।

ये श्रीमत्करपात्रनीतिमभितो जल्पन्त्यनल्पं वृथा
नित्यं कुत्सितमाचरन्ति च शठा गङ्गातटध्वाङ्क्षकाः।
त्याज्यस्यापि सुतादिकस्य सततं सङ्गस्पृहो दाम्भिका-
स्ते विद्वत्समुदायभेदनिपुणाः सर्वे त्रिजाताः स्मृताः।।६।।

ये शूद्रानपि मूढरूढधिषणांस्तास्तास्तथा योषितो
गायत्र्यादिजपादिकेषु चपलाः सञ्चोदयन्तो भृशम्।
अत्युग्रेषु निपातयन्ति नरकेष्वाकल्पकालं मुधा
ते नीचा नवकल्पनाकलुषिताः सर्वे त्रिजाताः स्मृताः।।७।।

मर्यादामयभूमिकाविदलने ये सन्ति क्षुद्राखवः
सत्सम्पच्चयसस्यसारदहने ये ग्रीष्मचण्डांशवः।
पाखण्डोन्नतभित्तिकाविरचने ये दुर्भगाः कारव-
स्ते वार्तापटवो विपाककटवः सर्वे त्रिजाताः स्मृताः।।८।।

ये पुत्रादिभृतीहया प्रियजनानोलण्डयन्तः क्षणात्
कौलाचारजुषः कलेः कुलपते र्गुह्यं विशन्त्यादरात्।
भग्नाशाः पुनरेव भुग्नगतयः कृण्वन्ति कुण्ठावलीं
ते चञ्चारुचिचारुचित्रचितयः सर्वे त्रिजाताः स्मृताः।।९।।

येऽपेक्षाविरहान् विचारविमुखान् सत्कुर्वते सर्वदा
कर्तव्यैकपरायणाप्तपुरुषोपेक्षादिसिद्धान्तराः।
ते वै संस्कृतवाङ्मयस्य भरणव्यापारभाजोऽधुना
कुर्वन्तोऽपचितिं खरस्य खसराः सर्वे त्रिजाताः स्मृताः।।१०।।

एवं वेदोदितश्रीततिविमुखतया वैपरीत्यं दधाना
दम्भाङ्गारप्रतप्तामितकलुषखरे खर्परे सिद्धधानाः।
दुर्भ्रान्ता भीरवोऽपि प्रियकपटकला व्यूहबद्धैकयुद्धा
ऊह्या अन्ये त्रिजाता इह विबुधवरै र्व्रात्यसङ्घावरुद्धाः।।११।।

का गतिस्त्रिजातानाम्? तदुपपादनेऽत्रावश्यं कश्चित् प्रयोजनविशेषो भवेत्? ओमिति ब्रूमः। अस्त्येव प्रयोजनविशेषः। अन्यथाऽसम्बद्धप्रलापः स्यात्। भूलोके परिदृश्यमाननानातिर्यक्प्रजातिसत्तैव। सा हि मनुष्यशरीरे सम्पादितविचित्रप्रकारदुरितजातनिमित्तैव केवलं कर्मभोगाय भवति। एवञ्चानेकप्रभेदप्रभिन्नास्त्रिजाता नात्मन उद्धाराय भवन्ति, नापि ते सामान्यतोऽपि धर्माधिकारभाजः। स्वभावपतिता ह्येते। तथा चात्रापि परिकरश्लोकः—

नानादेशाद्यवस्थाभृतविविधविधा स्ते त्रिजाता अनन्ता
येषां जन्मैव नूनं स्थलसलिलनभोवातजालेषु भूम्नाम्।
दृश्यानां स्थूलसूक्ष्मापघनचयजुषां प्राणिनामुद्भवाय
तेनैते धर्महीनाः प्रकृतिकलुषिताचारपीना भवन्ति।।१२।।

।। इति पातित्यपेटिकायां चतुर्दशं त्रिजातपदार्थविवेचनाधिकरणम्।।१४।।

●

## अथ पञ्चदशं विदुषामाचार्यपरम्पराग्राह्यत्वाधिकरणम्

अतः परं विद्वत्समुदायमधिकृत्य विचार्यते—किन्ते यथा प्रवर्तन्ते तथैव तैः प्रवर्तितव्यमुताचार्यपरम्परा ग्राह्येति। ननु सिद्धमेवैतद् यथाशास्त्रमेव सर्वैः प्रवर्तितव्यमिति सर्वान्तर्गतत्वाद् विदुषामपि तत् प्राप्तमेव। आचार्याणां परम्पराऽपि न शास्त्रप्रातिकुल्येन प्रवर्तत इति व्यर्थोऽयं विचारारम्भः। स्याद् व्यर्थो यदि—

**'आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयोऽभूत्।**
**भद्रा ह्येषां वाचि लक्ष्मी र्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति'।।**

इत्येवंप्रकाराणां विदुषां विषये स आरप्स्यमानः स्यात्। ननु के तर्हि विद्वांसः? भवान् यान् मनुते त एवेति ब्रूमः। नन्वहं तानेव मन्ये ये चतुर्दशसु विद्यास्वेकतमाध्यापने साम्प्रतिकशिक्षागारे नियुक्ताः। नाहं तथा मन्ये। विद्यासम्बन्धाद्धि विद्वांसो भवन्ति। सम्प्रति तथाविधा अपि महाभाष्याद्यध्यापने नियुक्ताः सन्ति येषां विद्यासम्बन्धो नास्ति, ये च पलाण्डुलशुनाद्यमेध्यजातं विना भोजनमपि न स्वीकुर्वन्ति कदाचिच्च मद्यमपि पिबन्ति। कथ न्ते विद्वांसो भवितुमर्हन्ति? यद्येवं कथन्तर्हि तेऽध्यापनकार्ये नियुक्ताः? साम्प्रतिकप्रजातन्त्रस्य विलक्षणप्रभावादित्येवात्र समुचितमुत्तरम्। एतेषां का गतिरिति प्रागेवाधिकरणद्वयेन प्रतिपादितमतो नैतेऽत्र विचारस्य विषयाः। के तर्हि? श्रूयताम्!

**'ये सङ्कीर्णसमाचाराः शास्त्रेषु विहितश्रमाः।**
**ते सर्वे विषया अत्र राष्ट्रदृष्टिपराङ्मुखाः'।।**

दृश्यन्ते खल्विह समधिगतशास्त्राणां स्वविद्याध्यापनकुशलानां नित्यनैमित्तिकादिकर्म कुर्वाणानामपि विदुषां लोभादिवशात् सङ्कीर्णव्यवहारा लोके। तथा हि—

'पङ्क्तिभेदश्च मूर्खेषु पक्षपातो गृहेषु च।
पोषणव्यग्रता लोके कुत[1]श्चिद् धनसंग्रहः।।२।।
प्रवेशो जैनवर्गेषु विद्यादाननिमित्तकः।
धर्माचार्यपदे दुष्टानर्हाणामभिषेचनम्।।३।।
नीतित्यागेन दुर्नीतेः प्रसङ्गे नेत्रमीलनम्।
पतितेषु स्पृहाधिक्यमुपेक्षा गुणिना तथा।।४।।
परिव्याप्तकदाचाराविरोधो नेतुरेव च।
श्लोकादिरचनाद्वारा सम्मानः पदलिप्सया।।५।।
विरक्तानाञ्च वित्तर्द्धौ सिद्धित्वेनोपवर्णनम्।
नेतारं क्षत्रियं प्राप्य राजर्षित्वोपपादनम्।।६।।
वैदिकामङ्गलाचारं कुर्वाणानामिहैव[2] च।
प्रौढपाणिनिकन्यानां[3] साभिलाषनिरीक्षणम्।।७।।
राज्यपालस्य राष्ट्रस्य पत्यु र्वा मुख्यमन्त्रिणः।
साम्मुख्ये स्वस्य सर्वात्मकृतार्थत्वेन भावनम्।।८।।
तेषां करयुगाद्वापि पुरस्कारोपलब्धये।
तदालये गति स्तूर्णं प्रेसवार्ता तथाऽऽगतौ।।९।।
भूयःसञ्चितवित्तस्य धर्मादावव्ययस्तथा।
एवमन्येऽपि सङ्कीर्णा आचारा विदुषामपि।।१०।।
दृश्यन्ते प्रायशो लोके शास्त्रदृष्ट्या विगर्हिताः।
संशयो जायते ह्यत्र विचारोऽपि ततः पुनः।।११।।
प्राप्तावसर एवास्ति शुद्धताप्रतिपत्तये।
ऋद्धिरेवं प्रवर्धेत नीति र्नयवतामपि।।१२।।

---

१. निषिद्धादपि।
२. प्राच्यविद्यासंरक्षणैकव्रते संस्कृतविश्वविद्यालये।
३. पाणिनिकन्याविद्यालयकन्यानामित्यर्थः।

पङ्क्तिभेदस्य गर्हणीयतामाह यमः—

**'न पङ्क्त्यां विषमं दद्यान् न याचेत न दापयेत्।**

**याचको दापको दाता न वै स्वर्गस्य गामिनः।।**

**प्राजापत्येन कृच्छ्रेण मुच्यन्ते कर्मणस्ततः।।** इति।

शङ्खोऽपि तथैव स्मरति—

**'एकपङ्क्त्युपविष्टानां विषमं यः प्रयच्छति।**

**यश्च याचत्यसौ पक्षं कुर्याद् ब्रह्महणि व्रतम्।।** इति।

विद्वांसो विपश्चित्सभायां दातृन् पङ्क्तिभेदाय प्रोत्साहयन्तीति त्रिषु लोकेषु विश्रुतम्। तथा हि वाराणस्यामेव नलपुरक्षेत्रे (नगवा) भागीरथीतटप्रदेशे केनचिद् मरहट्टनिकेतनेन मण्डलेश्वरेण विद्वद्वृद्धैरपहृतविवेकेन विषमं सभाजिता विद्वांसः। तत्र केषाञ्चिद् हस्तपुटे पञ्चशतमेव केषाञ्चिदेकादशशतं केषाञ्चिच्च पञ्चसहस्रं निपतितम्। एवमन्यत्रापि प्रायः। तत्रैव स्त्रीशूद्रादिकर्तृकहोमोऽप्यभूदिति कदाचाराविरोधोऽपि सुस्पष्ट एव। उपलक्षणमेतत् पङ्क्तिभेदनमिति। तथा हि—स्वसामर्थ्यबलेन विद्वत्प्रदेयस्य द्रव्यस्य स्वशिष्येभ्यः स्वयानचालकाय च दापनं गृहमागत्य तदर्धग्रहणञ्च मान्यानां विदुषां स्वभाव एव तिष्ठति। अगृहीतग्राहिता गृहीतविच्छेदनद्वारा न शोभते। मूर्खेषु च पक्षपातस्तेषां कार्यानुमेयः। सर्वथा विद्याविरागभाजो ये महनीयपदेष्वध्यापनाय विराजन्ते तत्र विद्यासम्बन्धवन्त एव निमित्तम्। अल्पीयांसः खलु विगतानैतिकधनस्पृहो विपश्चितः सन्ति यत्प्रभावात् शास्त्रपरम्पराऽविच्छिन्ना तिष्ठति। गृहादिपोषणव्यग्रताऽपि तदेकहेतुककार्यकारित्वदर्शनात् सहजानुमेया। एवमसत्प्रतिग्रहोऽपि निषिद्धः। यदाह मनुः—

**'असत्प्रतिग्रहीतारस्तथैवायाज्ययाजकाः।**

**नक्षत्रै र्जीवते यश्च सोऽन्धकारं प्रपद्यते'।।** इति।

एवञ्च कुतश्चित् केनापि प्रकारेण धनसंग्रहो विगर्हणीय एवास्ति। यत्र जैनमन्दिरे प्रवेशाद् यमसदनसमागमनमपि गरीयस्त्वेन स्वीकुर्वन्ति

शिष्टास्तत्र सर्वानर्थभूतधनसमीहया प्रगमनं कथन्न विगर्हणीयतामुपैति। उक्तमेवैतद्—

'हस्तिना ताड्यमानोऽपि न गच्छेज् जैनमन्दिरम्'।। इति।

उपलक्षणमेतद् बौद्धादिपाखण्डिवर्गप्रवेशस्यापि।

धर्माचार्यपदेषु हि पूर्वोक्तन्यायाच्चतुर्दशविद्याविलासशालिनो विगतस्पृहः सदाचारपूता महापुरुषा एवार्हन्ति न विवादविधायिनो दुष्टाः। इदमेव दुष्टानां दुष्टत्वं यदकाण्ड एव विवादोत्पादनमिति। तथा हि— श्रीमद्भगवत्पादैराद्यशङ्कराचार्यैं र्भारतराष्ट्रमखण्डितधर्मं विधातुं पीठचतुष्टयं सुस्थापितम्। इदानीमपि त्रयः शङ्कराचार्या विराजन्त एव परम्पराप्राप्ताः। तत्र शृङ्गेरीपीठे श्रीमद्भारतीतीर्था अविवादिता एव सन्ति। द्वारिकापीठे श्रीमत्स्वरूपानन्दसरस्वतीपादाश्चकासत्येव ये पूर्वं ज्योतिष्पीठे यथाविधानमितराचार्यसन्निधावभिषिक्ता आसन्। इदानीमपि तेषामेवाधिकारिता तत्र तावत्पर्यन्तमक्षुण्णैवावतिष्ठते यावत्तदीयकरप्रवालाभिषिक्तः कश्चिदन्यो न भवेत्। अयमेव न्याय्यः पन्थाः। एवमेव गोवर्धनपीठे सन्त्येव स्वाध्यायतपोनिरताः परम्परयैव प्राप्ताः श्रीमद्निश्चलानन्दसरस्वतीपादाः। एते सर्वे 'वेदो वा प्रायदर्शना' दित्यधिकरणोक्तासञ्जातविरोधित्वन्यायेन प्राबल्यप्रभाविभाविताः। एतत्त्रयव्यतिरिक्ता न केऽपि शङ्कराचार्यपदभाजो भवितुमर्हन्ति। परम्पराशून्यत्वादेव। आचार्यपदाभिषेके तावच्छङ्कराचार्योपस्थितिरनिवार्यैव। तदुपस्थितिविरहे सति पण्डितसभामात्रेण तदसिद्धेः। एवं सत्यपि ये विवादविधायिनो विभुतासम्पादनमात्रप्रयोजना विवेकशून्या दण्डधारिणो वराकाः स्वयम्भूशङ्कराचार्यास्ते वस्तुतो दुष्टानर्हाः। तदीयसभाशोभाविधायिनोऽपि विद्वांसो भवन्ति। अन्याय्यमेतत्। एवमन्यत्रापि द्रष्टव्यम्। नीतिविरहादेव राष्ट्रदुर्गतिरिति स्वार्थैकपरायणे शासकवर्गे भारतस्य महती क्षतिरिति तत्र मूलं न विचारयन्ति विद्वांसः। यदि कश्चिद् विचारको निर्दिशति यथार्थपक्षं तदा नेत्रे निमील्यासते। एकैकस्य धर्मशास्त्रीयग्रन्थस्य विरोधे धर्मनिरपेक्षतत्त्वानामनेके ग्रन्थाभासाः पुस्तकागारेषु सन्ति। धर्मविप्लावकाश्च विदधति स्वीयामिष्टसिद्धिं निर्द्वन्द्वं तथापि स्वीकृतमौनव्रता विद्वांसो न किमपि समीहन्ते समीहमानांश्चोपहसन्ति।

किमेतत्सर्वं तदीयकार्यताकाटौ निपतति? एवं पतितगृहशोभाविधायित्वं कथन्न पतितानामुत्साहवर्धनायालं स्यात्। धर्मज्ञसमयानां भेत्ता पतितः पतित एव। तत्सम्मानविधानपुरःसरा गुणिनामुपेक्षा न गौरवशालिनीं परम्परामावहति। एवमेव श्लोकादिरचनाद्वारकः सम्मानो विद्याविद्योतितविग्रहाणामेव द्विजोत्तमानां श्रीमद्भगवद्गुणानुकीर्तनरसिकानां विरक्तधर्माचार्याणामेव कृते क्रियमाणः शोभते, न तु स्वार्थलम्पटानां नेतृपदवाच्यानां केषाञ्चित् शिष्टपरम्पराबाहीकानाम्। यद्येते विद्वद्भिरेव तथा नैकसंख्याकपाटलस्रग्भिः शताब्दीभवनादिषु सभाजनीया भवेयुस्तर्हि शिष्टतल्लजत्वेनात्मानं विभावयन्तो राष्ट्रविक्षोभमवश्यमेव विदधीरन्। तथा च, विरक्तानां कृते विरक्तधर्म एव परमा सिद्धि र्न तु सर्वोच्चवित्तविभुता। तपःप्रभावाद् यदि सा तदीयपाणितल उपनिपतेदपि तर्हि भूयोजनसंपोष-क्षेमायैव भवति सद्विद्याविवर्धनाय वा न तु इष्टकाव्यूहविरचनाय गजराजकरगृहीतघण्टावादनचमत्कारोत्पादनाय वा। नैव कलौ कश्चिद् राजर्षिच्छायानुपात्यपि। यद्येवं तर्हि नेतुः क्षत्रियस्य स्वधर्मविमुखस्य च तथात्वसम्पादनं कथन्न विगर्हणीयं भवेत्? 'स्वाध्यायोऽध्येतव्य' इति विध्यनुरोधेनाधीतवेदस्य सकलनियमोपेतस्य द्विजोत्तमस्यैव मुखाद् विनिर्गता वेदा माङ्गल्यमाविष्कुर्वन्ति। क्षत्रियवैश्ययोस्तु तथाप्रकारयोः स्वधर्मक्रियासम्पादनायैव ते प्रभवन्ति। यद्येवं तर्हि यासां वेदेष्वधिकार एव न श्रूयते नापि स्मर्यते नैव च शिष्टाचारपरम्परायां परिदृश्यते तासां स्त्रीजातीनां मुखोदराद् निर्गच्छन्तोऽपि न ते वेदा एव भवन्ति। किन्तर्हि? लबेदास्ते स्त्रीविलासविजितमानसानामेव सन्तोषाधायकाः। तथा च, नैव मङ्गलाचरणत्वं सिद्ध्यति। प्रत्युतामङ्गलाचरणमेव तद् भवति। अनधिकृतकृतत्वादेव। तत्र विदुषां साभिलाषनिरीक्षणं शिष्टजनचित्तविक्षोभं जनयति। एवमेवात्रोक्ता अन्य आचारा अपि मन्तव्याः।

अत्र संशयो जायेत। कथम्? विद्वत्सम्पादितत्वादेव। विद्वांसो यत् कर्मजातं सादरं परिगृह्णन्ति नूनं तत् प्रेयसे श्रेयसे च भवतुमर्हतीति भूयिष्ठकल्पानां मनस्यावर्तेत। तथा च, शास्त्रदृष्ट्या विगर्हितत्वादकार्यतापि सम्भाव्येत। तदेवं संशयस्य पुरःस्फूर्तिकत्वाद् निर्णयाय विचार आवश्यक एव। एवं तर्हि किन्तावत् प्राप्तम्? समाचरणीयमेव सर्वं विद्वद्धौरेयैरपीति। कुतः?

पाणिग्रहणसंस्काराज् जाते वै दारसंग्रहे।
प्रीति स्तत्र प्रजायेत भूयसी विदुषामपि।।१।।
ततः कालक्रमेणैव जायेरन् बहवः सुताः।
तेषां सम्यग् व्यवस्था च धर्मद्वारा न सिद्ध्यति।।२।।
अतिक्रम्यापि धर्मं वै पूर्वोक्तानां परिग्रहः।
विद्वद्भिरपि कर्तव्यः कुटुम्बादेः प्रपुष्टये।।३।।
एवमादिस्थले नूनमभ्यनुज्ञा विलोक्यते।
ऋतुं विनापि भार्यासु यथाकामं प्रवृत्तिवत्।।४।।
अथवा परिपुष्टस्य वृष्यभोज्यमुपेयुषः।
वृत्तेऽपि सुरते तस्मिन् पौनःपुन्येन वृत्तिवत्।।५।।
नेतारः शासका ह्यत्र प्रजातन्त्रे व्यवस्थिताः।
नूनं तेषां करे सम्यक् तन्त्रजालं प्रवर्तते।।६।।
अतः प्रसादभूयस्त्वं नेतॄणां सम्भवेद् ध्रुवम्।
पदमानप्रतिष्ठादौ विदुषामुपकारकम्।।७।।
महनीयपदे दुष्टभोगलिप्सुदुरात्मनाम्।
नेतुः कृपाकटाक्षेण नियुक्तिश्चेह दृश्यते।।८।।
एवमेव विपश्चिद्भिः स्वार्थसाधनतत्परैः।
शासकान् प्रतिपूज्यापि विभुता प्रतिपद्यताम्।।९।।
कदाचारविरोधेन नीतिमार्गे समाश्रिते।
दुर्गति र्यदि लोके स्यात् को विद्वांस्तं समाश्रयेत्।।१०।।
सर्वथा दोषशून्यत्वात् कुटुम्बपरिपोषणे।
सुमनोग्राह्यता सिद्ध्येदिति प्राप्तेऽभिधीयते।।११।।

## सिद्धान्तः

मैवं वोचः प्रजास्वेतत् कदाचारानुशीलनम्।
विद्वद्व्यवहृतिद्वारा बुद्धिभेदं प्रकल्पयेत्।।१२।।

येषामाचारसम्पत्ति र्लोकस्थितिविधायिनी।
वेदशास्त्रानुगामित्वाद् मन्वादिभिरुदाहृता।।१३।।

त एव दारपुत्रादिव्यामोहादिबलेन वै।
विकर्मस्था भवेयुश्चेत् कथं सा दार्ढ्यमाप्नुयात्।।१४।।

मूर्खाणामेव संसाररागादिहतचेतसाम्।
परिवारपरिच्छिन्नव्यापारः साधु शोभते।।१५।।

धर्माय धीमतां लोके दिव्यतापादनाय च।
आविर्भावः प्रभावश्च जायते नात्र संशयः।।१६।।

तत्सिद्धान्तव्यवस्थायै तेषां दारसुतादयः।
पात्रभूता विराजन्ते नाटकेषु नटा इव।।१७।।

इतिहासपुराणादौ दारानपि सुतानपि।
क्लेशवारान्निधिं नीत्वा सत्यदानपरायणाः।।१८।।

दृश्यन्ते धार्मिकोत्तंसा अज्ञातस्वार्थसाधनाः।
श्रीमान् गोविन्दसिंहोऽत्र साक्षात् सिंहो निदर्शनम्।।१९।।

मा भूद् धर्मकृतः क्लेशः कलत्रादे र्विपश्चिताम्।
तथाप्यधर्ममार्गेण वित्तभोगो न युज्यते।।२०।।

पङ्क्तिभेदादयो दोषा नरकावासहेतवः।
स्वप्नेऽप्येषां समुल्लासो विदुषां नैव शोभते।।२१।।

त्रिदेवैरपि ये वन्द्याः पादप्रक्षालनादिभिः।
स्वार्थमुद्दिश्य तैरेव नेतुः पूजा न शस्यते।।२२।।

रथेन यत्पदप्राप्तिः सर्वदा सुलभा यदि।
नावाप्तुं तत् समीहन्ते गर्दभेन जडा अपि।।२३।।

नेतारः कामचेतारो विनापि चेत् स्त्रगादिभिः।
अप्रसन्ना भवेयु स्ते का हानि र्विदुषामिह।।२४।।

'अव्यवस्थितचित्तानां प्रसादोऽपि भयङ्करः'।
इति नीतिवचोऽस्माभिः प्रस्मर्तव्यं न कर्हिचित्।।२५।।

कदाचारविरोधेन नीतिमार्गानुसारिणाम्।
दुर्गतौ दृश्यमानायां तत्त्यागोक्तिरनर्थिका।।२६।।

नैव व्याप्ति स्तयो र्नूनं ग्रहीतुमपि शक्यते।
नीतिमार्गानुगामित्वे सम्पत्तेरपि दर्शनात्।।२७।।

वैपरीत्येन सा सिद्धा शास्त्रादौ तेन धार्मिकाः।
यावज्जीवं प्रवर्तन्ते तस्या रक्षणतत्पराः।।२८।।

यापि सत्यादिनिष्ठानां तत्कालमवलोक्यते।
नूनं सत्यपरीक्षार्थं भवेत् सा कीर्तिवर्धिनी।।२९।।

उत्पथं प्रतिपन्नानां सम्पद्वृद्धि र्दुरात्मनाम्।
किञ्चित्कालपरिच्छन्ना सा मूलक्षयकारिणी।।३०।।

युधिष्ठिरमहाभागो नीतेरेव समाश्रयात्।
पर्यन्ते वसुधामेव बुभुजे सद्गुणाकरः।।३१।।

तत्रैवासत्यमार्गेण वर्तमानः सुयोधनः।
स्वल्पं सुखं समासाद्य नाशमाप सबान्धवः।।३२।।

नीतिमार्गपरित्यागी मानसिंहो महीपतिः।
यवनाय स्वसारं स्वां समर्प्याल्पसुखं ययौ।।३३।।

तत्रैव बुद्धिमान् राणाप्रतापो नीतिरक्षकः।
तृणपत्रादिकं भुक्त्वा क्षत्रधर्ममुपेयिवान्।।३४।।

अद्यापि स्मरणीयस्य राज्ञस्तस्यामिता गुणाः।
प्रजाभि र्लोकगीतेषु गीयन्ते निर्गताश्रुभिः।।३५।।

मानसिंहः स दुर्मेधा हेयदृष्ट्या विलोक्यते।
ग्रहीतुं तस्य नामापि नेच्छन्ति पामरा अपि।।३६।।

धर्मनीत्या भवेत् कीर्तिः कीर्ति र्यस्य स जीवति।
तस्मात् सर्वस्वनाशेऽपि ग्राह्या नीति र्मनीषिभिः।।३७।।

भारतेऽद्य प्रजातन्त्रं कण्डूरिव विवर्धते।
दुर्नीतिरेव भूपानां हेतुरत्र विलोक्यते।।३८।।

सङ्कटापन्नकालेऽद्य राजानो हृतराज्यकाः।
धर्मकार्यं परित्यज्य मुख्यधारामुपागताः।।३९।।

प्रजातन्त्रमुपासीना भवन्ति सचिवा अपि।
ब्राह्मणा अपि केचिद्वै जातास्तद्भावभाविताः।।४०।।

ब्राह्मणास्ते तथा त्यक्तस्वाभिमाना नराधिपाः।
सचिवादिरतिप्राया राष्ट्रप्राणविदारकाः।।४१।।

एतद्घोरतमैः कृत्यै र्भारतं राष्ट्रमन्वहम्।
रोदितीव सदा तारं प्रतिभाति मतौ मम।।४२।।

एवम्प्रकारपापानामन्येषाञ्च दुरात्मनाम्।
नेतॄणां पूजया नूनं स्वर्लाभोऽपि मलोपमः।।४३।।

अहो! विपश्चितो वृद्धाः श्लोकद्वारा स्रगादिभिः।
आराधयन्ति नेतॄंस्तान् धिक् कष्टं किमतः परम्।।४४।।

विध्युद्देशादबुद्धं प्राक् प्रमाणै लौंकिकैश्च यत्।
वेदे लिङादिगम्यत्वादपूर्वं कार्यमुच्यते।।४५।।

तदेव शुद्धभावेन श्रेयसीह नियोजनात्।
पुंसां नियोग इत्येव प्रोच्यते नयगामिभिः।।४६।।

तदेव मुख्यकार्यं स्याद् विदुषां यच्च दृश्यते।
गृहदारादिवृद्ध्याख्यं गौणकार्यं तदुच्यते।।४७।।

न्यायतो लभ्यते नूनं कार्ययो गौंणमुख्ययोः।
मुख्यकार्यबलीयस्त्वं तस्माद् मुख्यं न लोपयेत्।।४८।।

यच्चोक्तमभ्यनुज्ञेति पङ्क्तिभेदादिकर्मसु।
पोषणाय कलत्रादेस्तत् समाधीयतेऽधुना।।४९।।
अभ्यनुज्ञाविधिस्तावद् दोषाभावावबोधनात्।
क्वचिद् निषिध्यमानेऽपि प्रवृत्तावर्थवान् भवेत्।।५०।।
यथा कन्याविवाहादावसत्यवदने श्रुता।
न सत्यं बाधते किन्तु हितं सम्पादयत्यलम्।।५१।।
'सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत्'।
इत्यादिवचनं चात्र मूलत्वेनोपलभ्यते।।५२।।
रजोदर्शनतः प्राग् वै कन्या दानाय शस्यते।
तत्रान्तरायभूतञ्च सत्यमप्यन्यथा भवेत्।।५३।।
शास्त्रै र्वेदादिभि र्लोके हितमेव प्रमीयते।
तस्मात् सत्यस्य तात्पर्यं हित एवावसीयते।।५४।।
क्रूरेणान्विष्यमाणस्य हन्तुमेव तु कस्यचित्।
असत्यवर्त्मना गुप्तिः सत्यादपि विशिष्यते।।५५।।
सत्यं तत्र महापापपङ्कमूलं निगद्यते।
एवमादिस्थले नूनमभ्यनुज्ञा प्रतिष्ठते।।५६।।
ऋतुभिन्नेऽपि काले यद् भार्यागमनमुच्यते।
तत्र सप्तपदीकाले शास्त्रमेवानुरुध्यते।।५७।।
वृष्यभोज्यवतः पुंसोऽसकृद् या सुरते मतिः।
करणीयतया प्रोक्ता तत्रान्यत् कारणं शृणु।।५८।।
दिव्यौषधिगुणानान्ते प्रभावा यद्बलेन च।
असकृद्गमनं पुंसो न दोषाय प्रकल्पते।।५९।।
इत्येवमादिना नूनं प्रशंसायां तथौषधेः।
तात्पर्यं ब्रुवती सर्वमभ्यनुज्ञा विराजते।।६०।।

नैतावता स्त्रियां पुंसोऽसकृद्वा वार्धकेऽपि वा।
रागादभ्यञ्जनं सिध्येद् विरोधादन्यशास्त्रतः।।६१।।
यद्येवं तर्हि मूर्खास्ते वार्धके ये प्रयत्नतः।
मिश्रा इव प्रवर्तन्ते तरुण्यामसकृद् नराः।।६२।।
पूर्वं विपश्चितो घर्मवर्षादित्राणहेतवे।
कृतकृत्याः कुटीमेव कृत्वाऽऽसन् गृहमेधिनः।।६३।।
इदानीं वित्ततः पूर्णा गृहारामादिभि र्युताः।
यदि ते स्युः कथं तेषां पङ्क्तिभेदादिकर्मसु।।६४।।
अभ्यनुज्ञा भवेत् सिद्धा भूयोऽनर्थप्रदायिनी।
नैव सत्तामुपेयात् सा न क्लीबे सुरतस्पृहा।।६५।।
तस्मादनिष्टसम्पाताल्लोकवृत्तविभेदनात्।
शिष्टगर्हाद्युपेतत्वात् पङ्क्तिभेदादिकर्मणाम्।।६६।।
त्यागं विधाय विद्वद्भी राष्ट्रधर्मपरायणैः।
ग्राह्या शुद्धसदाचारप्रोता शिष्टपरम्परा।।६७।।

अधिगतनियमपुरःसरविद्या यत्प्रयोजना तया तदेव सम्पादयितुं शक्यते, नान्यत् किञ्चन। विद्वांसोऽपि तदेव सम्पादयन्ति यदा तया तदभिलषन्ति। विद्यया च प्रेयः श्रेयो वा सम्पादयितुं शक्यते। प्रेयसः कोटौ यथा स्वर्ग आयाति तथैव जायापुत्रगृहकोशस्थप्रभूतवित्त-विचित्रवाहननेतृसचिवाधिकारिमध्यप्रभावातिशयप्रभृतय आयान्त्येव। काम्यत्वादेते कामा भवन्ति। एतेषां सर्वेषामेव प्रेयसां प्राप्तिः समधिगतविद्यानामन्येषां वा द्विधा सम्भवति। धर्ममार्गेण तद्भिन्नमार्गेण वा। विप्रतिषिद्धमिदमुच्यते विद्यया प्रेयोऽपि प्राप्यत इति। 'विद्ययाऽमृतमश्नुत' इत्येवमादिश्रुतिभिस्तस्या मोक्षैकसाधनकत्व-विनिर्णयात्? सत्यमाह भवान्। सर्वोऽपि वेदान्तिपथप्रविष्ट एवमेव ब्रूयात्। विद्यापदेनात्र धर्मानुष्ठानोपयोगि तज्ज्ञानमुच्यते यस्य च तदङ्गत्वं केवललिङ्गात् प्रसाधितमेव। एवञ्च धर्मानुष्ठानद्वारा विद्यायाः प्रेयोऽङ्गत्वं

भवत्येव। यद्यपि विदुषां कृते कामा न सन्ति। श्रेयोमात्रप्रयोजनकत्वात् तेषाम्। यथोक्तम्—

**'अतः कायमिदं विद्वानविद्याकामकर्मभिः।**
**आरब्धमिति नैकस्मिन् प्रतिबुद्धोऽनुषज्जते।।**
**असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे।**
**अपत्ये द्रविणे वापि कः कुर्याद् ममतां बुधः।।**

(श्रीमद्भागवते ४.२०.५-६)

तथापि—

**को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः।**
**स्नेहपाशै र्दृढै र्बद्धमुत्सहेत विमोचितुम्।।**
**कोऽन्वर्थतिष्णां विसृजेत् प्राणेभ्योऽपि य ईप्सितः।**
**यं क्रीणात्यसुभिः प्रेष्ठै स्तस्करः सेवको वणिक्'।।** इति।

(श्रीमद्भागवते ७.६, ९-१०)

**कोऽपि वेदान्त्यपि**

यद्यनेन न्यायेनैते कामाश्चेतसि निपतेयु स्तदा धर्ममार्गेणैव तत्प्राप्तेरौचित्यमस्ति, न तु तत्प्रत्यनीकेन विगर्हितेन पङ्क्तिभेदादि-रूपेणाधर्ममार्गेण। धर्मेणैव यथाकालं सर्वं सम्पादयितुं शक्यत्वात्।

अपि च, सागरमेखलायाः सकलाया एव वसुन्धरायाः प्रमाणभूता विद्वांसो भवन्ति यदाचरितप्रभावात् साऽऽचारवती भवति। यथोक्तं भगवता श्रीवासुदेवेन—

**'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते'।।** इति।

एवं सति तेषां धर्मव्यतिक्रमेण तदनुवर्तनक्रमेण सर्वोऽपि लोक—स्तथैव स्यात्। ततश्च निर्मर्यादेयं भूः स्यात्। सर्वमेतद् विचार्य तैः प्रवर्तितव्यम्।

ते विपश्चितो ब्राह्मणाः स्वाचारादेव त्रिलोक्यां सर्वापेक्षया गरीयस्त्वेन गण्यन्ते। यथोक्तं भगवतैव—

**'देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुता स्तु तेषाम्।**
**भवः परः सोऽथ विरिञ्चिवीर्यः स मत्परोऽहं द्विजदेवदेवः।।**
**न ब्राह्मणैस्तुलये भूतमन्यत् पश्यामि पुत्राः! किमतः परन्तु।**
**यस्मिन् नृभिः प्रहुतं श्रद्धयाऽहमश्नामि कामं न तथाग्निहोत्रे'।।** इति।
(श्रीमद्भागवते ५.५.२२.२३)

एवम्प्रकारभव्यमहिमानो विपश्चितो नेतुस्तत्समानधर्मणोऽधिकारिणो वा स्वल्पप्रयोजनाय सपर्यां श्लोकादिना स्रक्चन्दनादिना वा विदध्युरिति कथमियं भूः स्वस्था भवेत्। तस्मात्तैरवश्यमेवानादिपण्डितपरम्पराप्राप्ता सदाचारपद्धतिरनुवर्तनीयैवेति सिद्धम्। परिकरश्लोकोऽप्यत्र भवति—

**'शास्त्रै र्या च विदूषिता धृतिधनैः शिष्टैः सदा गर्हिता**
**लोके विप्रियमादधाति परमं या सन्निपातोपमा।**
**वृद्धाकर्तृकसौरतस्मृतिरिवानर्थप्रधानैव सा**
**त्याज्या निन्द्यपरम्परा सुमनसां सद्वृत्तसम्पत्तये'।।**

प्रयोजनन्तु पातित्यासङ्क्रमाद् धर्माबाह्यता पूर्वपक्षे सिद्धान्ते च तत्संक्रमात् तद्बाह्यतेति पूर्वोत्तरपक्षाभ्यामेव सुस्पष्टम्।।

**।। इति पातित्यपेटिकायां पञ्चदशं विदुषामाचार्यपरम्परा-ग्राह्यत्वाधिकरणम्।।१५।।**

## अथ षोडशं यतीनामपि शास्त्रविरुद्धकृत्याननुष्ठेयत्वाधिकरणम्

अतः परं चतुर्थाश्रमिणो यतीनधिकृत्य विचार्यते यत् तैरपि विशेषप्रयोजनाय नेत्रधिकारिपरिग्रहस्तद्विशेषसभाजनं च पङ्क्तिभेदादयोऽपि वा विधातव्या उत नेति। अत्र तेषां विशेषसामर्थ्यशालित्वाद् धर्मव्यतिक्रमोऽप्यकिञ्चित्कर इति तेजीयसां न दोषाय वह्नेः सर्वभुजो यथेति न्यायेन सिध्यत्येव। तथा च, तदीयव्यवहारेऽन्येऽपि शास्त्रविरुद्धप्रकारा दृश्यन्ते—

कथावाचनकर्मादावागतामन्त्रितस्य वै।
त्यागस्तत्रैव मोहाद् वाऽनामन्त्रितपरिग्रहः।।१।।

गुरोः पुण्यतिथौ स्वीयाश्रम एव विशेषतः।
गायकै र्गायिकाभि श्च गानकर्मप्रवर्तनम्।।२।।

भूयस्तदीयहस्तेषु भोगद्रव्यसमर्पणम्।
विद्वत्करेषु तत्रैव स्वल्परूप्यकपातनम्।।३।।

जनमध्ये च विप्रेभ्यो दानं तस्य च कीर्तनम्।
प्रदेयवस्तुनोऽल्पस्य भूयस्त्वेनोपवर्णनम्।।४।।

एकाल्पज्ञबलेनैव वटुकानां परिग्रहः।
मूर्खान् विधाय तानेव ग्रामान् प्रति विसर्जनम्।।५।।

कुम्भादिपर्वजातेषु विभुतायाः प्रदर्शनम्।
धनिकादेः कृते तत्र कुटीरापादनन्तथा।।६।।

मन्दिरादिविनिर्माणे कोटिमुद्रापरिव्ययः।
वेदादिशास्त्ररक्षादौ दूराद् नेत्रनिमीलनम्।।७।।

भारते चतुरो मासानष्टौ द्वीपान्तरेषु च।
निवासो धर्मशिक्षादिव्याजेनैव सयुक्तिकः।।८।।
एवमादिक्रियाजालेऽस्माकं दिव्यमहात्मनाम्।
अन्तर्मोदसमुल्लास इति प्रायः प्रभाषणम्।।९।।
गृहेष्वासक्तचित्तानां नराणां योषितान्तथा।
मध्ये वेदान्तविद्यायाः प्रचारस्तत्र भोजनम्।।१०।।
मुम्बय्यां श्रेष्ठिनां गेहे चातुर्मास्यन् तथा पुनः।
गङ्गादितीर्थदेशेषु सकृदागमनं क्वचित्।।११।।
न्यक्कृत्य विदुषो वृद्धान् धनिकाभ्यागतान् प्रति।
प्रपञ्चवार्तयाऽमूल्यकालस्य क्षपणं मुधा।।१२।।
विहिपादिदलोत्थाया दुर्नीतेश्च समर्थनम्।
तद्धर्मसंसदाभासे नेतृपार्श्वोपवेशनम्।।१३।।
निजभक्ताङ्गनापङ्क्तौ भोज्यस्य ग्रहणन् तथा।
ताभ्य एव महामन्त्रदीक्षासम्पादनं मुदा।।१४।।
ता मण्डलेश्वरीकर्तुं समवेत्य प्रयत्नतः।
उत्तरीयस्य तद्देहे मन्त्रपूर्वकमर्पणम्।।१५।।
इत्येवं बहवः प्रायः परिव्राट्पातहेतवः।
दृश्यन्ते लोभमाश्रित्य गर्ह्याचारा इतस्ततः।।१६।।
तेषु सामर्थ्यशालित्वाद् दोषाभावानुमानतः।
सदाचारतया भ्रान्ति र्जनानां स्यादतस्त्विह।।१७।।
तामेव मूलतश्छेत्तुं विचारोपक्रमः कृतः।
येन शुद्धसदाचारः प्रतिष्ठामाप्नुयात् सदा।।१८।।
नूनं सन्न्यासमार्गेण यथाशास्त्रं द्विजोत्तमः।
वर्तमानः परं ब्रह्म साक्षान्नारायणो भवेत्।।१९।।

स एव शास्त्रमुत्सृज्य मायाजालं प्रवर्तयन्।
क्षिप्रं रसातलं गच्छेच्छ्रेयोमार्गप्रदूषणात्।।२०।।

मन्त्रदीक्षादिसंस्कारद्वारा देवसमर्चनात्।
तद्रूपतां ब्रुवाणस्य सत्यधर्मात् परिच्युतिः।।२१।।

मिथ्याचारं च भोगैकसामग्रीसंग्रहादिकम्।
सर्वं कुत्सितप्रायं जीवनं प्रतिपादयेत्।।२२।।

न हि कुत्सितकामाढ्यं जीवनं न्यासिनामपि।
प्राशस्त्यं भजते लोके नारीमध्य इवार्चनम्।।२३।।

विदुषीणां सभाव्याजात् प्रौढासंस्कृतयोषिताम्।
पीठं प्रति समाह्वानं दीक्षितस्य न शोभते।।२४।।

कुख्याता याः स्त्रियो लोके स्वतन्त्राः सर्वकर्मसु।
कौशेयवसना स्ता वै साध्व्यः स्युस्तिलकेन किम्?।।२५।।

एवम्भूतशठस्त्रीणां द्रव्यै र्भूयोभिरञ्जसा।
निर्मितं न्यासिनां पीठं नरकाय भवेद् ध्रुवम्।।२६।।

न हि संन्यासमाश्रित्य शोभते मठविस्तरः।
सन्ध्ययो नैंव घण्टानां वादनाद् राष्ट्रभव्यता।।२७।।

तत्र तु त्यागमालम्ब्य वेदादिशास्त्रपोषणात्।
भारतास्तित्वरक्षायै दिव्यनीतिः सुशोभते।।२८।।

अनेककोटिमुद्राभि र्निर्मितै र्भवनै र्नु किम्?
श्रेष्ठिनां भव्यशुश्रूषामात्रं यत्र मुहु र्भवेत्।।२९।।

भवेद् मन्दिरनिर्माणकार्यं मुद्रार्बुदैरपि।
किन्तु तदंशतः शास्त्ररक्षाकार्यं भवेद् ध्रुवम्।।३०।।

मा भूद् मठेषु संस्थानं शिक्षणस्य तदद्भुतम्।
यच्छ्रेष्ठिमनस स्तोषे वित्तस्य साधनं भवेद्।।३१।।

धिक् तन्मठस्य भव्यत्वं यत्राल्पज्ञबलेन वै।
वृथैव बहवो बाला गृह्यन्ते वित्तलिप्सया।।३२।।

अहो काश्यां मया दृष्टो गङ्गाघट्टस्थिते मठे।
म्लेच्छपङ्क्तावदन् मूढः प्राचार्यः प्रीतमानसः।।३३।।

तत्रस्था वटवः सर्वे भोजनैरेव निर्वृताः।
केवलं मठकार्याणि कुर्वन्ति क्रीतदासवत्।।३४।।

ते बालाः श्रेष्ठिनां मध्ये समानीय मठाधिपैः।
प्रदर्श्यन्ते तथा स्वीयभव्यकार्यं प्रशस्यते।।३५।।

श्रेष्ठिनोऽपि मठाध्यक्षतत्कार्यं वीक्ष्य निर्वृताः।
अकुप्यै र्वसुभिस्तेषामिष्टसिद्धिं प्रकुर्वते।।३६।।

अहो सम्पत्तिलोभेन महान्तः कोऽपि योषिता।
एकासनं समारुह्य गङ्गामटति मूढधीः।।३७।।

भारतेऽत्र विरक्तानां तथा तद्ब्रह्मचारिणाम्।
विद्यालयस्थबालानां मूर्खता स्याद् महापदः।।३८।।

त्रयीभ्रष्टविकर्मस्थबाहुल्ये मूर्खतैव सा।
हेतू राष्ट्रपरायत्ते तस्याः कारणतोच्यते।।३९।।

धर्मं प्रबाध्य लोकेऽस्मिन् केवलं द्रव्यसंग्रहः।
विलोक्यते नृणां यच्च कारणं तत्र मूर्खता।।४०।।

राजहस्तात् समुत्प्लुत्य राष्ट्रमेतद्धतप्रभम्।
तन्मूर्खताप्रयुक्त्यैव बिभर्ति खलतन्त्रताम्।।४१।।

सम्प्रत्येवं प्रजातन्त्रे राज्ञामुत्साहभागिता।
यतीनां वा प्रतिष्ठाप्त्यै नेतॄन् प्रत्यनुरागिता।।४२।।

भोगदृष्टिं समालम्ब्य ब्राह्मणानामपीह वै।
अत्याधुनिकविद्यातो म्लेच्छदेशगतिस्तथा।।४३।।

क्षत्रियाणां सुराशस्त्रव्यापारविषया रतिः।
शूद्रादीनाञ्च वेदेषु च्छद्मनैव प्रवर्तनम्।।४४।।
अथवा किं बहूक्तेन शिष्टविक्षोभकारिणा।
शासने दृश्यते यद् यद् मूर्खता तत्र कारणम्।।४५।।
इत्येवंकृत्यजातेषु प्रकाश ईप्स्यते यतः।
तत्रैव मूर्खतोत्पत्तिः कथं न स्याद् महापदः।।४६।।
तस्माद् विरक्तदेशेषु बालानां ब्रह्मचारिणाम्।
शास्त्रज्ञसुस्थितिद्वारा विद्यावृद्धिः समीह्यते।।४७।।
धन्यास्ते वैष्णवाचार्याः सदाचारपुरःसरम्।
परप्राधान्यतो ये वै सद्विद्यां तां वितन्वते।।४८।।
कोटिमुद्रा व्ययीकृत्य मठारामं वितत्य च।
पौरोहित्यप्रकारेण भिक्षामात्रेण वा पुनः।।४९।।
शिक्षकानीहमाना स्ते यतयो दुरितप्लुताः।
अबोधविक्लवान् बालान् मूर्खताब्धौ क्षिपन्ति ये।।५०।।
प्राच्यविद्याप्रतिष्ठायाः प्रचारे शासनेन वै।
शाला याः स्थापिता स्तत्र प्राध्यापकसुबन्धवः।।५१।।
शास्त्रप्रवर्धिनीं वृत्तिं त्यक्त्वा सर्वाणि कुर्वते।
केचिद् द्रव्यादिलोभेन व्यासीभूताश्चकासति।।५२।।
केचिद् धूर्तोत्तमा दिक्षु पौरोहित्यं प्रकुर्वते।
राजनीतिपराश्चान्ये दुष्टगोष्ठीप्रिया स्तथा।।५३।।
सर्वथा श्रमवैधुर्याज्जाता वैशाखनन्दनाः।
तत्प्रभावाद् महामूर्खा जायन्ते छात्रबन्धवः।।५४।।
यस्मिन् राष्ट्रे महामूर्खभूयस्त्वं सुष्ठु राजते।
तत्रानुमीयते सर्वं दौर्भाग्यं पामरैरपि।।५५।।

वेदानाश्रित्य सिद्धानां मुनिभि स्तत्त्वगामिभिः।
विपश्चिद्धिश्च विस्तारं प्राप्तानां तत्त्वपुष्टये।।५६।।
विद्यानामत्र मूर्खै र्नु परीक्षा दीयते कथम्।
ज्ञात्वैतत् सकलं तथ्यं यतयोऽपि विमोहिताः।।५७।।
यदि मिथ्याप्रपञ्चाःस्यु र्दशा राष्ट्रस्य का भवेत्।
तस्माद् मठादिविस्तारव्यामोहादिनिरासतः।।५८।।
ग्राह्यः परम्पराप्राप्त आचारो यतिभिः सदा।
अन्यथा तेऽन्धतामिस्त्रे पतेयुरिति निश्चयः।।५९।।
एवमेव विभूतिः सा भारतस्य पुरातनी।
भूयोभूयः प्रवर्धेत धर्मशास्त्रानुगामिनी।।६०।।
नेत्रादीन् पृष्ठतः कृत्वा मलवद् यतिभिः पुनः।
शुद्धिं विधाय कर्तव्यं निजधर्मस्य पालनम्।।६१।।

प्रयोजनन्त्वधिकरणप्रतिपादनेनैव पूर्वाधिकरणोक्तं गतप्रायम्।

।। इति पातित्यपेटिकायां षोडशं यतीनामपि शास्त्रविरुद्धकृत्यानुष्ठेत्वाधिकरणम्।।१६।।

# अथ सप्तदशं पतितापत्यैः साकं विवाहादिव्यवहाराणामकर्तव्यत्वाधिकरणम्

अपेक्षितविचारं विधायेदानीं पतितापत्यजातान्यधिकृत्य विचार्यते यत्तदपत्यैः साकं विवाहादिव्यवहारः शिष्टैः कर्तव्य उत नेति? अपत्यञ्च द्वेधा—अपत्यं स्त्रीरपत्यं पुमानिति। कश्चित् पश्चात् तथा पतितो ज्ञातिभिस्त्यज्यमानः स्वापत्यैरपि यदि त्यजते तदा तदपत्येषु दोषासंक्रमाच्छिष्टग्राह्यता सिध्यत्येवेति नायं तद्विषयको विचारः। यस्तु पूर्वमेव पतितः पश्चाच्च निजभार्यायामपत्यमुत्पादयति, तथा च जातपूर्वैरपि न त्यज्यते तदा तदपत्यविषयकोऽयं विचारोऽवसरप्राप्त एव। पतितपदेनात्र पूर्वमेवोक्ता स्त एव गृह्यन्ते ये कृतप्रायश्चित्ता अपि त्याज्या भवन्ति। ते च मनूक्ताश्चत्वार स्तथा कलौ समुद्रलङ्घिन स्तत्संसर्गिणश्च। संसर्गिणोऽपि महापातकित्वं स्मरति भगवान् मनुः—

**'ब्रह्महा मद्यपः स्तेन स्तथैव गुरुतल्पगः।**
**एते महापातकिनो य श्च तैः सह संवसेत्'।।** इति।

एतद्व्यतिरिक्ताः प्रायश्चित्तादिना शुद्धाः सन्तो गृह्यन्त एवेति प्रतीयते। शिष्टैरवकीर्णिप्रभृतय उपपातकिनोऽपि त्यज्यन्ते इति ब्रह्मसूत्रकारास्तद्भाष्यकारश्रीमद्भगवत्पादप्रभृतयश्च। संशयश्चात्र संसर्गिविषयकशिष्टव्यवहारदर्शनाद् भवति। न्यायतः कः पन्था इति निर्णयाय विचार आवश्यक एव। किन्तावदत्र प्राप्तम्? पतितोभयविधापत्यैः साकं व्यवहारः कर्तव्य इति। कुतः?

**निजक्रियावशात् पुंसां पातित्यमुपजायते।**
**तद्दोष स्तदपत्येषु गच्छत्येवेत्यसंशयः।।१।।**

**तथापि करुणाभावात् प्रायश्चित्तादिना पुनः।**
**शुद्धिं विधाय तैः साकं व्यवहारः प्रतीयते।।२।।**

पतितग्राह्यतायां हि शिष्टानां लोभहेतुता।
साम्प्रतं दृश्यते नेयं तदपत्येषु लभ्यते।।३।।

पितृदेवो भवेत्यादिनियोगादरवान् सुतः।
कथं त्यागे मतिं कुर्यात् पितु र्यो देव आत्मनः।।४।।

पितृभक्तिबलेनैव जामदग्न्यो महामुनिः।
लोकोत्तरप्रभावः स ख्यातोऽभूज्जगतीतले।।५।।

एवमेव पुरु र्धीमान् सुरतानन्दनिःस्पृहः।
जग्राह वार्धकं भक्त्या ययाते र्विषयैषिणः।।६।।

कः सचेता व्यवायेन जायमानं सुखं महत्।
त्यक्तुमेवं मतिं कुर्याद् यौवनार्पणतः क्षणात्।।७।।

यत्सुखायैव वेदेषु वाजिमेधादयो मखाः।
अहीनसत्रयागा श्च वितताः सन्ति पावनाः।।८।।

अप्सरोद्वारत स्तद्वै सौरतं सुखमीरितम्।
तदेव स्वर्गनाम्नाऽत्र वेदशास्त्रेषु गीयते।।९।।

अहो धन्यः पुरु र्धीमान् पितृभक्तिपरायणः।
देवैरपि सुदुस्त्याज्यं त्यक्तवान् यः सुखं महत्।।१०।।

अस्मिन्नेव क्रमेऽष्टासु वसुष्वेकतमो बुधः।
भीष्मो गङ्गासुतः साक्षात् पितुरेव सुखेहया।।११।।

कन्यासु निःस्पृहो जातस्त्रिलोकी याः समीहते।
भार्गवाज्ञां तिरश्चक्रे नैव तासु मनो दधे।।१२।।

कन्यासु कनकाभासु यतयोऽपि विमोहिताः।
सुखं मठे समासीनाः साचि दृष्टिं प्रकुर्वते।।१३।।

काषायीकृत्य ताः केचिद् मठ एव निरन्तरम्।
स्थापयन्ति सदा प्रेम्णा यतयोऽज्ञानदूषिताः।।१४।।

दृश्यन्ते वनिता ह्येवं पीठाचार्यमठेष्वपि।
काश्चित्ताननुगच्छन्ति च्छायेवाऽशुद्धभावनाः।।१५।।
एवम्भूतस्थितौ लोके गाङ्गेयोऽपारविक्रमः।
ऊर्ध्वरेताः सदैवासीत् पितुः प्रियचिकीर्षया।।१६।।
नमो भीष्मप्रतिज्ञाय भीष्मायामिततेजसे।
येन दूरीकृता हृत्तः कामिन्यो लोललोचनाः।।१७।।
एवमेव स लोकानां दैवतं पुरुषोत्तमः।
रामो दाशरथिः साक्षात् परं ब्रह्म सनातनः।।१८।।
जायावशङ्गतस्यापि पितुराज्ञां गृहीतवान्।
चतुर्दश समाः सोऽपि सपत्नीकः सबान्धवः।।१९।।
तापसः सन् वनेष्वेव व्यतीयाय तपस्विभिः।
पश्चादेव महीं सर्वां बुभुजे सद्भिरादृतः।।२०।।
इत्थमेव सुतः कोऽपि त्याज्यस्यापि पितुः किल।
सेवां वितनुते चेद् वै व्यवहार्यः कथन्न सः।।२१।।
बलात्कारप्रदुष्टाया मातुस्त्यागो यथा कलौ।
सम्मतो नैव पुत्रेण पितुश्चापि तथा न किम्।।२२।।
अतो धर्मपथं गच्छन् पतितस्य पितुः सदा।
सेवापरायणः पुत्रो व्यवहार्यो मनीषिभिः।।२३।।
यथा तदीयकन्याया ग्रहणं स्मर्यते क्वचित्।
तथैव तत्सुतस्यापि ग्रहणं नैव दोषभाक्।।२४।।
मा भूत् स्तेनसुरापादिमहापातकिनः पितुः।
अत्यागिनः कुपुत्रस्य ग्रहणं सद्भिरादरात्।।२५।।
समुद्रलङ्घिनश्चैव पितुरत्यागिनः सुताः।
उद्वाह्या याजने ग्राह्याः शिष्टैरपि च यत्नतः।।२६।।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
इत्येतत्कर्मणामत्र महादोषः प्रदृश्यते।।२७।।
ब्राह्मणस्य वधे जाते तत्कुटुम्बविपन्नता।
सुरापानेऽपि सैवात्र झटित्येवानुमीयते।।२८।।
स्वर्णादिस्तेयकृत्येन सैव भूयो विलोक्यते।
गुर्वङ्गनागमेनापि विग्रहो नापलप्यते।।२९।।
इत्येवं दृष्टदोषत्वाच्चतुर्णां कर्मणामिह।
महापातकता युक्ता लङ्घने ऽब्धेस्तु सा कथम्?।।३०।।
नूनं पारे समुद्रस्य ये ये देशा व्यवस्थिताः।
त्रयीभ्रष्टप्रधाना स्ते श्रौताचारविवर्जिताः।।३१।।
परस्त्रीलम्पटा स्तत्र गोमांसस्यापि भक्षकाः।
प्रायशः पुरुषा नग्ना योषितश्च तथैव ताः।।३२।।
प्रदृश्यन्ते समुद्रादे स्तटेषु विजिहीर्षया।
तद्दृश्यदर्शने लोला अत्रत्या न्यासिनो ध्रुवम्।।३३।।
यान्ति पारे समुद्रस्य सच्छिक्षाव्याजतश्च ते।
एवं दोषोऽस्ति तत्रापि लङ्घनेऽब्धेस्तथापि वै।।३४।।
अस्माद् गङ्गाजलं नीत्वा विशिष्टान्नमपि क्वचित्।
इन्द्रियनिग्रहद्वारा गमनं नैव दोषभाक्।।३५।।
यद्यत्रापि भवान् ब्रूतेऽधर्माधिक्यबलेन वै।
वायवोऽपि प्रदुष्टाः स्यु स्तत्रोपायमिमं शृणु।।३६।।
वायूनपि गृहीत्वा वै विशेषार्थसमीहया।
गन्तव्यं सादरं पुंभि र्दोषश्चैव न्तु नो भवेत्।।३७।।
अत एव च पाङ्क्तेया ब्राह्मणा वैष्णवा अपि।
नारायणं हृदि ध्यात्वा सामग्रीः सकला अपि।।३८।।

गृहीत्वैव प्रगच्छन्ति प्रयोजनविशेषतः।
तत्रत्यान्नजलादींश्च वारयन्ति प्रयत्नतः।।३९।।

भारतागमने तेषां मुखच्छाया तनीयसी।
कदाचिन्नैव दृष्टाऽत्र तद्दोषास्पर्शतः किल।।४०।।

इत्थञ्च पितरो येषां सदाचाराविलोपतः।
समुद्रलङ्घनं कृत्वा स्वेष्टसिद्धिं विधाय च।।४१।।

हृष्टात्मानः समायाताः कामं तैः सह सादरम्।
विवाहव्यवहारः स्यादिति प्राप्तेऽभिधीयते।।४२।।

सिद्धान्तः

तथ्यमाविष्कृतं सर्वं पतितापत्यभावनाम्।
वेदमूलां वदद्भि र्वै भवद्भि र्नीतिगामिभिः।।४३।।

पतितस्य पितु र्नूनमत्यागे शास्त्रमूलता।
आपादिता च या साऽन्यशास्त्रेणैव विरुद्ध्यते।।४४।।

पितृनुद्दिश्य ये सर्वे महान्तः पुरुषा इह।
अकुर्वन् यत् पृथिव्यान्ते मान्या स्तेनैव कर्मणा।।४५।।

तथापि शास्त्रसम्पत्ते र्गरीयस्त्वं विलोक्यताम्।
शास्त्रार्थातिक्रमाद् भीतो भीष्मः शान्तनुनन्दनः।।४६।।

अत्यन्तप्रेयसोऽपीह पितु र्हस्ते न दत्तवान्।
पिण्डं दर्भस्तरे योग्यं विज्ञातेऽपि महात्मनः।।४७।।

सा माता स पिता चैव स भ्राता बान्धवा श्च ते।
शास्त्रोदितार्यमर्यादां पालयन्ति सदैव ये।।४८।।

मर्यादात्यागमात्रेण निःसम्बन्धा श्च ते पुनः।
त्यज्यन्ते ज्ञातिभिस्तूर्णं शिष्टैराचारबन्धुभिः।।४९।।

कैकेयी भरतेनैव त्यक्ता गर्ह्येण कर्मणा।
हिरण्यकशिपु स्त्यक्तः प्रह्लादेन च रावणः।।५०।।
भ्राता विश्रुतविक्रान्तः स्वानुजेनैव धीमता।
न च ते धर्मतो रुद्धाः शास्त्रदृष्टिपरायणाः।।५१।।
एवञ्च त्यागपक्षोऽत्र पतितानां प्रतीयते।
ततश्चात्यागिभिः पुत्रै र्व्यवहारः कथं भवेत्।।५२।।
यच्छब्द आह तस्यैव प्रामाण्यं नः सुसम्मतम्।
स च मातुः कलौ नैव त्यागं ब्रूते पितु स्तथा।।५३।।
नैव शास्त्रवचो दृष्टं त्याग स्तस्य ततो भवेत्।
एवं तत्सेविपुत्रेभ्यः शिष्टैः कन्या न दीयताम्।।५४।।
कन्या नैव पितु र्वित्तं न्यासं तां कवयो विदुः।
एवमुद्वाहपर्यन्तं रक्षन्ति पितरः सदा।।५५।।
पतितस्यापि कन्यां वै ग्राह्यत्वेन ब्रवीत्यहो।
शास्त्रं तेनैव कन्यां तां गृह्णन्त्यत्र मनीषिणः।।५६।।
याज्ञवल्क्यो वशिष्ठश्च वृद्धहारीत एव च।
कन्योद्वाहेऽनुमन्यन्ते पतितानामपि क्वचित्।।५७।।
एवं पतितकन्याया दृष्टान्तस्य बलेन वै।
उद्वाहे तत्सुतस्यापि महानिष्टं प्रसज्यते।।५८।।
पतिता ज्जायमानस्य पश्चाद् वा पतितस्य वै।
पितुरत्यागिनश्चैव सुतस्याग्राह्यता ततः।।५९।।
निश्चीयते तथाप्यत्र तत्समृद्धिप्रभाविताः।
सादरं येऽनुगृह्णन्ति त्याज्या स्तेऽपि विपश्चिताम्।।६०।।

शास्त्रीयमर्यादामूलक एव सम्बन्धो लोके प्राशस्त्यं भजते। मर्यादात्यागमात्रेण विच्छिन्नसम्बन्धाः पुरुषा भवन्ति। एवञ्च

मर्यादापरिपालनैकव्यसनिभिः सर्वैरेव भाव्यम्। तत्त्यागेऽपि यावच्छास्त्रं निर्दिशति तावत् परिपालनीयं भवति। शास्त्रमेव पतितस्य पितुरकिञ्चनामेव कन्यां ग्राह्यत्वेन ब्रूते, अतः सा यथाशास्त्रं शिष्टै र्ग्राह्या, न तु तत्सुतोऽपि। तद्ग्रहणे शास्त्राभावात्। कन्यापरिग्रहविषये तावदाह वशिष्ठः—

**'पतितोत्पन्नः पतितो भवति, अन्यत्र स्त्रियाः।**

**सा हि परगामिनी भवति, तामरिक्थामुपयच्छेत'**।। इति।

(१३.२०.२१)

याज्ञवल्क्योऽप्येवमेवाह—

**'कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम्'**।। इति। (३.२६१)

सोपवासां कृतपूर्वदिवसोपवासाम्। अकिञ्चनामगृहीतपितृवस्त्रादिकामिति प्रायश्चित्तमयूखे।

तथा च वृद्धहारीतोऽपि—

**'पतितस्य कुमारीं विवस्त्रामहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाच्छादितां नाहमेतेषां न ममैत इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत्'** इति।

एतद्वचनैरिदमेव निश्चीयते यत् पतितैरर्जितं वित्तं पतितोपभोगार्थमेव भवति नेतुरुत्तराधिकारितेव तत्कुलप्रसूतस्य। पतितकन्यायाः प्रायश्चित्तमपि तदन्नोपयोगप्रयुक्तदुरितनिचयोपशमनार्थमेव। प्रायश्चित्तेन शुद्धा सा तत्सम्बन्धविधुरा तीर्थे स्वगृहे वोह्यते, न तु पितु र्गृहे। नन्वेवं तर्हि तत्सुतमपि प्रायश्चित्तादिना काञ्चनाभं शुद्धं विधाय पितृरिक्थबहिर्भूतमकिञ्चनं कन्याप्रदानेनानुगृह्णातु भवान्। मैवं वोचः! सकलमेवं कुचोद्यं धर्माधर्मयो र्हेतुं निभालयतो नैयायिकस्यैव शोभते, न तु न्यायानुशीलनपरिपूतान्तरस्य मीमांसकस्य। 'यच्छब्द आह तदस्माकं प्रमाणमिति शास्त्रकारा आहुः, शब्दस्तु पतितकन्यामेव ग्राह्यत्वेन ब्रूते पूर्वोक्तप्रकाराम्, न तु तत्सुतमपि तथाविधम्। तथा च, तस्याग्राह्यता प्रजातन्त्रविधौ सत्पुरुषस्येवायत्नतः सिद्ध्यति। सत्यप्येवं ये पतित-

समृद्धितल्लोकोत्तरप्रभावप्रभाभावितान्तरा भवन्ति तेऽपि शिष्टैस्त्याज्या एवेति सिद्धम्। एतेन 'तत्सुतस्यापि ग्रहणं नैव दोषभागि'ति पूर्वपक्षिवचनं समाहितं भवति। यत्तु ब्रह्महस्तेनसुरापगुरुतल्पगानां दृष्टमहादोषनिमित्तत्त्वेन महापातकित्वमभ्युपगम्य समुद्रलङ्घिनस्तादृशदोषादर्शनेन न महापातकित्वम्, तथा च ब्रह्महादिसुतस्याग्रहणेऽपि समुद्रलङ्घिसुतस्य ग्रहणे दोषाभाव इति चोदितं तत्रोच्यते—

यदि दृष्टगुणत्वेन धर्मत्वं स्यात् तथा पुनः।
दृष्टदोषस्य सामर्थ्यादधर्मत्वस्य निर्णयः।।६१।।

तदा वै भवतो युक्तिः शिष्टानां सम्मता भवेत्।
तयो र्यदाऽवगम्यत्वं वेदादेव प्रसाधितम्।।६२।।

तदा मूसलघातेन खण्डचूर्णोपमा भवेत्।
भवतः सकला युक्ति र्मूढमानसगामिनी।।६३।।

केचिद् नैयायिका ह्येवं वाग्जाले मुग्धमानसाः।
प्रभाषन्तेऽल्पबुद्धित्वाद् न चैवं तत्त्वचिन्तकाः।।६५।।

न हि ब्रह्मवधादीनां तत्कुटुम्बविपत्तितः।
महापातकता युक्ता वैपरीत्यस्य सम्भवात्।।६५।।

कुटुम्बपालकस्यापि वधे जाते कुटिम्बनः।
अन्यस्य कस्यचिद् योगात् समृद्धि र्दृश्यते पुनः।।६६।।

सुरापानेऽपि दुष्टानां कदाचारावलम्बनात्।
समृद्धि र्भूयसी लोके दृश्यते दारुणा क्वचित्।।६७।।

स्वर्णनाशविपन्नस्य ब्राह्मणस्य क्वचित् पुनः।
प्रतिग्रहादिनाऽकुप्यरत्नभाजनता न किम्।।६८।।

गुर्वङ्गनागमेऽपीह क्लीबस्योदारचेतसः।
कथं सम्भाव्यते स्वान्तजन्मेव विग्रहग्रहः।।६९।।

एवं ब्रह्मवधादीनां धर्मत्वमनुमीयताम्।
धर्मे सर्वस्वदानादौ दातु र्वीक्ष्य विपन्नताम्।।७०।।
अधर्मत्वमति र्नूनं विदुष स्ते भविष्यति।
तथा चानल्पनिन्दासु प्रतिष्ठा पुष्टिमेष्यति।।७१।।
एवं दोषबहुत्वेन व्यवस्थाऽभावतस्त्वया।
शास्त्रप्रमाणगम्यत्वं तयोरभ्युपगम्यताम्।।७२।।
ब्रह्महत्यादिदुष्टानां प्रायश्चित्तमुपेयुषाम्।
त्याज्यत्वं स्याद् यथा लोके तथैवाब्धिविलङ्घिनः।।७३।।
धर्मज्ञसमयात् सिद्धं तस्मादब्धिविलङ्घनम्।
महापातककोटौ तद् गण्यते शास्त्रपण्डितैः।।७४।।
महापातकता तस्य दृष्टदोषं विनाऽपि वै।
धर्मज्ञसमयादेव कलौ ज्ञेया मनीषिभिः।।७५।।
एवमेव च शास्त्रेषु युक्तिरत्नान्यशेषतः।
दृश्यन्ते सततं सर्वैः सद्विद्यापालकै र्बुधैः।।७६।।
यद्यप्युदन्वतः पारे म्लेच्छानां बहुलत्वतः।
धर्माधर्मविवेकोऽपि शशशृङ्गायितोऽभवत्।।७७।।
तथाऽप्यमुत्र सामान्यधर्मा रूढा व्यवस्थिताः।
सन्त्येव वैदिकै र्येषामपलापो न युज्यते।।७८।।
म्लेच्छा अप्यात्मजामन्यपुरुषाय ददते सदा।
दयादाक्षिण्यवन्त स्ते दृश्यन्ते वैदिका इव।।७९।।
आत्मजायाप्रिया स्तेऽपि शीलरक्षणतत्पराः।
चौर्यादिगर्ह्यकृत्येभ्यो व्यावृत्ता अपि ते ध्रुवम्।।८०।।
तेषु केचित् परस्त्रीषु लम्पटाः शौचवर्जिताः।
स्त्रियश्च धर्मराहित्याद् नग्नप्राया गतह्रियः।।८१।।

विहरन्ति समुद्रादेस्तटेषु सुरतेहया।
नैतावता भवेद् दोषो भारतेऽपि तथात्वतः।।८२।।
गतलज्जत्वमत्रापि नारीणां दृश्यते क्वचित्।
पुरुषा श्च परस्त्रीषु लम्पटाः सन्ति नात्र किम्।।८३।।
अहो चिकित्सका अत्र स्त्रीयौनशोषणे रताः।
साधवोऽपि प्रजाता वै वनितासुरतस्पृहः।।८४।।
ननु गार्हस्थ्यमुक्तेषु काषायादिधरेषु ते।
नारायणप्रियाः सन्तः सन्त्येवात्र महाशयाः।।८५।।
येषामूषरभूतासु मनोभूमिषु सुभ्रुवाम्।
सुस्थितिद्वारतो नास्ति मन्मथाङ्कुरसम्भवः।।८६।।
यथाविधि च ते नूनं धर्मकार्यं प्रकुर्वते।
अपवर्गप्रधाना स्ते नोपालभ्याः कदाचन।।८७।।
यद्येवं तर्हि तत्रापि म्लेच्छेष्वच्छिन्नसंयमाः।
महात्मानो भवन्त्येव विशुद्धसमताजुषः।।८८।।
एवमेव गृहस्थेषु म्लेच्छाश्चारित्रशालिनः।
केचित् तत्र विलोक्यन्ते महापुरुषसंश्रयाः।।८९।।
यदि भौतिकताग्राहाद् ग्रस्ता भोगैकमानसाः।
दुष्कृत्यपरमा म्लेच्छा भवन्तीत्युच्यते त्वया।।९०।।
अत्रापि बहवो दुष्टा हीनसत्त्वा स्तथाविधाः।
अनार्या इव संजाताः कथं दृष्टौ न सन्ति ते।।९१।।
अहो विधिविधातारो नेतारो मतलिप्सया।
ग्रामकुक्कुटमद्यस्त्रीसमर्पणतया नरान्।।९२।।
पातयन्त्यन्धतामिस्त्रे स्वयमेव पतन्ति च।
नैतादृशं महापापं म्लेच्छाः कुर्वन्ति साम्प्रतम्।।९३।।

एतादृशो महादुष्टा द्रव्यद्वारा महात्मनाम्।
सन्न्यासिनां प्रिया जाता दीक्षिता स्तेभ्य एव च।।९४।।

अहो प्रव्राजका अत्र नेतु र्वृद्धेश्चिकीर्षकाः।
चण्डीपाठादिकं कर्म कारयन्ति मुहु र्मुहुः।।९५।।

एवम्भूतस्थितौ नूनं ते शठाः शठविग्रहाः।
ये वाय्वन्नजलैः साकं कुर्वन्त्यब्धिविलङ्घनम्।।९६।।

यदि विविधविकर्मव्यापृता दुष्टसत्त्वाः
पशव इव विमूढा भारतेऽपि प्लवन्ते।
पवनजलफलादीन्यात्मन स्तर्हि नीत्वा
जलधिमतिचरन्तो धृष्टधूर्तोत्तमा स्ते।।९७।।

इत्थं श्रौतपरम्पराप्रणयिभिस्त्रैवर्णिकैः सादरं
धर्मज्ञप्रथिततत्वतः स समयो मान्य स्तदीयो महान्।
तस्मादेव समुद्रलङ्घिन इह त्यागोऽपि सिद्धः कलौ
तत्पुत्राव्यवहार्यताऽपि च ततो न्यायादनुप्राणिता।।९८।।

एवं सत्यपि येऽबुधा हतधियो दुर्नीतिबद्धादरा
मूर्खेष्वेव वदन्ति हिन्दुषु कुतः पातित्यमस्तीति ते।
नूनं धर्मविदूषका निजलघुस्वार्थाय दुश्चेष्टया
सर्वामेव महीमिमां विदधते सन्मार्गशून्योदराम्।।९९।।

अत्र स्वच्छविधाऽनपायत इयं शिष्टैः समा सत्क्रिया
भ्रष्टस्यैव पितुः सुतस्य सदसि स्यात् पूर्वपक्षे तथा।
सिद्धान्तेऽपि च तस्य तद्विमुखता दोषान्वयाल्लभ्यते
नित्यं वा सहभागिता च सततं स्याद् नैर्ऋते कर्मणि।।१००।।

।। इतिपातित्यपेटिकायां सप्तदशं पतितापत्यैः साकं विवाहादिव्यवहाराणाम-कर्तव्यत्वाधिकरणम् ।।१७।।

●

# अथाष्टादशं स्वकुटुम्बपोषणमात्रदृष्टिपुत्राणां शिष्टैरग्राह्यत्वाधिकरणम्

पूर्वाधिकरणे पतितानां कन्याया यथाशास्त्रं ग्राह्यत्वमुक्तं तत्पुत्राणामग्राह्यत्वञ्चेति। अन्यान्यपि पातित्यप्रयोजककर्माणि पातकोपपातकातिपातकप्रभृतीनि भवन्ति भूमिष्ठकल्पैरन्यैरपि वा क्रियमाणानि यदि तज्जनितदुरितक्षपणाय प्रायश्चित्तानि न क्रियन्ते। तथाविधान्यपि कानिचिद् भवन्ति मूलस्यैवोच्छदकानि यानि पापत्वेन नाकलयितुं सुशकानि भवन्ति गृहकर्मव्यापृतैकमानसैः पुरुषैः। तथाप्रकारकपापसंपृक्तानां तदीयान्नजलकुत्सितसंस्कारपरिपुष्टानां पुत्राणां निंजकन्याप्रदानेन शिष्टै र्ग्राह्यत्वमस्ति न वेति ग्रन्थोपसंहाररूपतया विचारयितुमवशिष्यते। ननु विप्रतिषिद्धमिदमुच्यते वंशमूलोच्छेदकान्यपि पापानि नाकलयितुं शक्यन्त इति। प्रायः पापेषु शिष्टैरपि क्रियमाणेष्वुत्संक्रान्तमानसानि पुरुषजातानि भवन्ति। कथं तानि नाकलयितुं शक्यन्ते मूढा अपि यदा तथाविधपापविदो भवन्ति? उच्यते—

स्थूलसूक्ष्मादिभेदेन पापानामसंख्यता।
शास्त्रेषु दृश्यते तत्र केषाञ्चिद्विज्ञवेद्यता।।१।।

सुरताहारनिद्रासु मनुष्याः पशवस्तथा।
समाना एव सन्तीह धर्मस्तेषां विशेषकः।।२।।

अत एव सदा धर्माद् धीनाः पशुसमा इह।
मानवा अपि गण्यन्ते सूक्तयश्चात्र सन्ति हि।।३।।

मोहैकपरमा लोके कुटुम्बैकपरायणाः।
मैकालेशिक्षणोन्मार्गे बद्धरागा दुराशयाः।।४।।

अभावे जीवतां पुंसां दुःखावर्ते निमज्जताम्।
उपेक्षातः शिशून् नैजान् द्रव्यै भूयोभिरञ्जसा।।५।।
पालयन्तस्तथा शश्वत् पाठयन्तो मुहु र्मुहुः।
खादन्तः खादयन्तश्च भोज्यजातं गृहादिषु।।६।।
गङ्गादिपुण्यतीर्थेभ्यस्तथा दानादिधर्मतः।
पराङ्मुखाश्च वेदान्तचर्चास्वाहितबुद्धयः।।७।।
एकवृत्तावसन्तुष्टा वृत्त्यन्तरमुपागताः।
तथाप्युत्कोचमार्गेण धनसञ्चयतत्पराः।।८।।
प्रातरेव समुत्थाय क्लर्का म्लेच्छवचोविदः।
पुत्रानध्याप्य तान्येव भुक्त्वा तूर्णं व्रजन्ति च।।९।।
कार्यालयं तथागत्य कृत्वा तत्कार्यमादरात्।
रात्रौ स्वपन्ति भुक्त्वैव पयः पीत्वा सुनिर्वृताः।।१०।।
एवमादिक्रियाजाले कालक्षपणकारिणः।
व्ययीकुर्वन्ति पुत्राणामुच्चैः शिक्षासु सर्वतः।।११।।
दशलक्षाधिकं द्रव्यं निर्धनोपेक्षया द्रुतम्।
इत्येवंकरणे धर्ममन्तरायं वदन्ति ते।।१२।।
शास्त्रसंस्कारतः पूर्णभ्रष्टास्तेषां सुता यदा।
महाभृत्यपदारूढा जायन्ते द्रव्यहारिणः।।१३।।
तदीयां तत्तपश्चर्यां सिद्धां वीक्ष्य तदा नराः।
आश्चर्यसागरे मग्नाश्चर्यां कुर्वन्ति सर्वतः।।१४।।
तदुद्वाहविधौ ते च कन्यापक्षात् समागतैः।
सपत्नीका रहोवार्तां कुर्वन्ति द्रव्यलालसाः।।१५।।
भूयसोऽन्याँस्तिरस्कृत्य कञ्चिदेव धनाढ्यकम्।
अनुगृह्णन्ति पर्याप्तधनद्वारैव दुर्धियः।।१६।।

ते दीनाः पितरस्तासां कन्यकानां सुखेप्सया।
अन्यायादर्जितं द्रव्यं वर्धयन्ति पुनस्तथा।।१७।।
विवाहात् पूर्वमेवात्र सुतप्रेरणयैव ते।
अङ्गुलीयार्पणव्याजात् कुसंस्कारं वितन्वते।।१८।।
अहो सम्मेलनं पूर्वं कन्यकावरयोरिदम्।
अनर्थबहुलं लोके क्लर्कास्तन्वन्ति सादरम्।।१९।।
विवाहे पुरुषैः साकं महिला अपि कुबुद्धयः।
पुंश्चल्य इव गच्छन्ति धिक्! कष्टं किमतः परम्।।२०।।
एकस्मै दिवसायैव परिवारस्य भुक्तये।
मितं प्रतिगृहीतं स्वं पात्रतां तामपेक्षते।।२१।।
यस्याः सम्प्राप्तये पुंभि ब्राह्मणैरेव केवलम्।
नित्यनैमित्तिकादीनि विधीयन्ते निरन्तरम्।।२२।।
कुलीनता यथाकालं संस्काराणां व्यवस्थितिः।
स्वाध्यायाभ्यसनद्वारा धर्मानुष्ठानशालिता।।२३।।
ज्ञातिभ्यो बान्धवेभ्यश्च स्वाश्रितेभ्यस्तथा पुनः।
अन्येभ्यो निर्धनेभ्यो वा द्रव्यसम्पादनं मुदा।।२४।।
गर्हणीयक्रियात्यागो मितव्ययपुरःसरम्।
परिवारपालनञ्चैव शुभदृष्टिवितानता।।२५।।
न्यायप्रियत्वमित्यादिपदार्थपिण्डतैव सा।
सत्पात्रता द्विजातीनां शास्त्रेणैव निगद्यते।।२६।।
सत्पात्रतागुणोपेता ये तेऽपि कन्यकापितुः।
स्वेच्छयैव प्रदत्तं स्वं नेच्छन्ति तपसः क्षयात्।।२७।।
सर्वथा भोगतः पूर्णा भ्रष्टा भ्रष्टक्रियास्तथा।
ग्रहीतुमेव वाञ्छन्ति सर्वस्वं बद्धमुष्टयः।।२८।।

नूनमेतेऽभिवाञ्छन्ति लोकत्रयमपीह वै।
प्राणार्पणेन साहाय्यं तदीयं साधयत्विति।।२९।।
किन्तु सम्बन्धिनोऽप्येते क्षुद्रकार्ये समागते।
यत्किञ्चिदपि साहाय्यं कर्तुं नेच्छन्ति पामराः।।३०।।
अहोऽत्र पशवो मूढा लोकाय स्वोपयोगिताम्।
साधयन्तो यथाकालमुत्सृजन्ति कलेवरम्।।३१।।
ऐते नराधमा नूनं स्वार्थसंसाधनोत्सुकाः।
लोकं प्रबाध्य मुञ्चन्ति भोगभुक्ताः कलेवरम्।।३२।।
तथा च पशुभिस्तेषां तुलनां ये प्रकुर्वते।
अपमानं पशूनान्ते वराकाणां वितन्वते।।३३।।
एतेभ्यस्ते गरीयांसो महापातकिनो नराः।
प्रायश्चित्तादिना ये वै शुद्धां दृष्टिं विचिन्वते।।३४।।
सर्वेषां पातकानां वै प्रायश्चित्तं विधीयते।
किन्त्वमीषां कृते किञ्चित् प्रायश्चित्तं न विद्यते।।३५।।
'वत्सरत्रितयं कुर्याद् नरः कृच्छ्रं विशुद्धये।
आत्मतुल्यं सुवर्णञ्च दद्याद् वा विप्रतुष्टिकृत्।।
हिरण्यदानं गोदानं भूमिदानं तथैव च।
नाशयन्त्याशु पापानि महापातकजान्यपि'।। इति। क. ८.६।
इत्याहतु र्गाधिपुत्रः कश्यपश्च महामुनी।
महापातकिनां पापप्रायश्चित्तविधिं पुनः।।३६।।
विष्णो र्भव्यवचः पुंभि र्हृदि सर्वै र्निधीयताम्।
'अश्वमेधेन शुध्येयु र्महापातकिनस्त्विमे।
पृथिव्याः सर्वतीर्थानां तथानुसरणेन वा'।। इति।
(वि. ३५.६)

एवमेव मुनिः शङ्खः प्रायश्चित्तं ब्रवीति वै।।३७।।
'नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने।
अधःशायी जटाधारी पर्णमूलफलाशनः।।
ग्रामे विशेद् वा भिक्षार्थी स्वकर्म परिकीर्तयेत्।
एककालं समश्नानो वर्षे द्वादशमे गते।।
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे'।। इति।
(श. १७.१.३)

ननु पातकिनामेतत्प्रायश्चित्तक्रियाविधिः।
विशुद्धये कथन्न स्यात् तेषां दुष्टधियामिह।।३८।।
विष्णो र्मायागृहीतत्वात् तमिस्रागह्वरस्थिताः।
यदि शाठ्यपरास्ते स्युस्तेषां दोषः कथं ततः।।३९।।
मैवं वोचः! यतस्तेऽत्र धर्मदृष्टिपराङ्मुखाः।
पश्यन्ति स्वास्थ्यहेतुत्वं नित्यसिद्धव्रतादिषु।।४०।।
अतो रोगसमाक्रान्तास्तत्र गच्छन्ति सादरम्।
मूढान् वञ्चयितुं यत्र योगाभासो वितन्यते।।४१।।
संसारव्याधिभीतानां भोगतो दूरचेतसाम्।
धार्मिकाणां कृते यद्वै मुनिना शास्त्रमीरितम्।।४२।।
योगशास्त्रं तदेवाद्याधारीकृत्य नराधमाः।
भोगदुष्टान् समाहृत्य शिक्षयन्ति कुपद्धतिम्।।४३।।
शुक्राकर्षक्रियाव्याजात् सेवन्ते सुन्दरीरपि।
ये खलास्तेऽपि जानीयुः कथं योगस्य सद्गतिम्।।४४।।
निगदन्ति त एवात्र योगो भोगश्च तावुभौ।
करस्थावेव विद्येते तेषामेवं य आसते।।४५।।

मा भूत् सा तत्त्वदृष्ट्याऽत्र योगसेवा कुयोगिनाम्।
स्वास्थ्यलाभफलत्वेऽस्या उपयोगो न दुष्यति।।४६।।
मैवं वादी र्यतस्तत्र शिबिरे योगशिक्षकः।
धर्मशास्त्रमतिक्रम्य ब्रूतेऽनर्थपरा गिरः।।४७।।
'नैव धर्मा भवेयुस्ते वर्णानाश्रित्य ये स्थिताः।
तानुन्मूलयितुं यूयं वर्णानेव निकृन्तत।।४८।।
प्रणवादि र्भवेद् वेदो गायत्री यत्र चोदिता।
प्राणायामेषु सैवास्ति योगस्तैरेव राजते।।४९।।
स योगः सर्ववर्णेषु समाविष्टः प्रदृश्यते।
तस्माद् वेदो भवत्येव पृथिव्यां सार्ववर्णिकः।।५०।।
एवं सत्यपि यैरेव वेदाच्छूद्रा बहिष्कृताः।
ते धूर्ता ब्राह्मणा ज्ञेया ऋषयोऽपि पुनः पुनः'।।५१।।
इत्येवमादयो दुष्टा वाचो मूर्खैः कुयोगिभिः।
शिविरेषु निगद्यन्ते हिरण्यादे र्बुभुक्षुभिः।।५२।।
निरीहाणामुपेक्षातः सुतेषु व्ययशालिनाम्।
पापमेव तदत्यन्तं विवाहे धनहारिणाम्।।५३।।
नयत्यपूर्णभोगानां सन्निधिं तान् कुयोगिनाम्।
येन ते पूर्णतो भ्रष्टाः पतन्ति निरयेऽशुचौ।।५४।।
वरं प्राणपरित्यागो रोगैः पापस्य पाचकैः।
न तु स्वास्थ्यस्य लाभाय सङ्गमो दुष्टयोगिनाम्।।५५।।
किन्तेन स्वास्थ्यलाभेन संस्कारोच्छेदकारिणा।
जीवनेनापि किन्तेन यत्र भोगप्रधानता।।५६।।
ते मयांऽद्याऽनुयुज्यन्ते वर्णधर्मप्रदूषकाः।
व्यायामस्यैव योगत्वं वदन्तः स्वार्थसाधकाः।।५७।।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
इत्येवं ये यमाः प्रोक्तास्तथा शौचं तपः पुनः।।५८।।
स्वाध्यायाभ्याससन्तोषौ तथेशप्रणिधायिता।
इति ये नियमाः प्रोक्ता मुनिना तत्त्वगामिना।।५९।।
तान् सर्वान् सेवमानस्य स्यादुत्तरेष्वधिक्रिया।
तेभ्योऽथवा विरक्तस्येत्यन्त्यः पक्षो न युज्यते।।६०।।
तदाम्नानस्य वैयर्थ्याद् योगशास्त्रे पतञ्जलेः।
आद्ये तु भवतामेव मर्यादोच्छेदशालिनाम्।।६१।।
त्वद्भक्तानां तथा भोगसंग्रहव्यवसायिनाम्।
अधिकारस्य विच्छेदो दुग्धे तक्रमिवापतेत्।।६२।।
त्वय्यहिंसा कथन्नु स्यात् पीडयेद् यो महात्मनः।
धर्मशास्त्रतिरस्कारैः सत्यसम्भावना कुतः।।६३।।
विद्वत्परम्पराद्वारा ब्राह्मणत्वे सतीह वै।
शास्त्राण्यधीत्य तथ्यं यो ब्रूते सत्यं वदेदसौ।।६४।।
अन्तरेणाधिकारं यः शास्त्रमप्यन्यथा वदेत्।
लोकान् वञ्चयितुं नूनं कथं स सत्यमाश्रयेत्।।६५।।
अस्तेयमपि नैवं स्याद् ब्रह्मवृत्तिहरस्य ते।
शूद्रत्वादेव योगिन्! ते ब्रह्मचर्यं कुतो भवेत्।।६६।।
कोटिमुद्रा हरेद् यो हि स चेत् स्यादपरिग्रही।
व्याघ्रोऽपि मांसमुत्सृज्य फलाहारी भवेत् ततः।।६७।।
नियमानां यमव्याप्ते स्तदभावे कुतः स्थितिः।
एवञ्चोभयशून्यत्वादुत्तराङ्गेषु शून्यता।।६८।।
निश्चीयते ततः सिद्धा लोकवञ्चनधूर्तता।
अहो धूर्ता निगद्यन्ते योगमार्गोपदेशकाः।।६९।।

धर्मान् वर्णाश्रमस्थान् तानुपेक्ष्य न प्रतिष्ठते।
योगोऽष्टावयवोपेतस्तस्मात् तान् दूषयन्नसौ।।७०।।
भोगिव्यायामशिक्षायां रतो द्रव्याभिलाषुकः।
योगं सन्दूषयेदेव यन्नाम्ना द्रव्यमीप्सति।।७१।।
नन्वत्रभवता कस्मादुच्यते योग आत्मनः।
सिद्धावपेक्षते वर्णाश्रमधर्मान् क्रमादिति।।७२।।
मूढबुद्धे! शृणुष्व त्वं ब्रह्मचर्यं यमेषु यद्।
वेदाध्ययननाम्ना तच्छास्त्रेणैवाभिधीयते।।७३।।
एवञ्च ब्रह्मचर्येऽस्मिन् त्रयो वर्णा द्विजातयः।
नियुज्यन्ते सदा वैदैरुपनीताधिकारतः।।७४।।
स्वाध्यायो नियमेष्वेवं गण्यते यो मनीषिभिः।
अधीतस्यैव वेदस्याभ्यासः सोऽत्र निगद्यते।।७५।।
स्वाध्यायाभ्यसनञ्चैवं संन्यासेष्वपि युज्यते।
पतेयुरन्यथा सर्वे परिव्राज इतीरितम्।।७६।।
एवञ्च शूद्रजातीनां स्वधर्मपरिशीलनम्।
योग इत्युच्यते प्राज्ञैस्तद्भ्रष्टास्तु पतन्त्यधः।।७७।।
ततश्च मूर्खतोपेतान् भोगिव्यामामशिक्षकान्।
सेवन्ते ये कुसंस्कारव्यामोहितधियोऽधमाः।।७८।।
तेषां वकैकवृत्तीनामुपकारापेतचेतसाम्।
संवेदनाविहीनानां पापराशेरसंक्षयात्।।७९।।
अधर्मे धर्मबुद्धित्वात् प्रपुष्टदुरितान्यहो।
कुलोच्छेदकराण्येव सन्तीति गम्यते बुधैः।।८०।।
एतान् गृहादिसंसक्तान् कूपमण्डूकधर्मणः।
दृष्ट्वा भूयिष्ठकल्पानां मतिः शुद्धैव दृश्यते।।८१।।

अहो सौभाग्यमेतेषां पुत्राद्युन्नतिकारिणाम्।
यत्तपस्याबलेनैव सुताः सर्वे व्यवस्थिताः।।८२।।

यद्येते निजकन्यानां विवाहे मुक्तपाणयः।
तदा पुत्रसमुद्वाहे लक्षाणां दशकं कियत्।।८३।।

लक्षाणां त्रिंशतापीह गृह्णीयुः कन्यका यदि।
कन्यासौभाग्यसम्पत्ते र्न्यूनतैव प्रतीयताम्।।८४।।

किं किं न साधितं त्वेतैः पुत्रवृद्ध्यै महात्मभिः।
संसाराद् दृष्टिमाकृष्य जीवनं स्वं तृणीकृतम्।।८५।।

धन्याः पुत्राश्च पुत्र्यश्च यत्पितरः सत्त्वमात्मनः।
तृणीकृत्य प्रवर्तन्ते तत्समृद्धिसमीहया।।८६।।

इत्येवंकल्पनामूढाः शिष्टा अपि कदाचन।
तत्सुतोद्वाहकर्मादौ प्रवर्तेरन्नत स्त्विह।।८७।।

तत्प्रवृत्तिव्युदासाय कन्यकोद्धरणाय वा।
विचारोऽयं मयाऽऽरब्धः शिष्टास्तुष्यन्तु साम्प्रतम्।।८८।।

येषां कुटुम्बदृष्टीनां हीनोपेक्षाविधायिनाम्।
देहत्यागे तदीयास्ते पुत्रा उद्यमशालिनः।।८९।।

कपोतादे र्निवासाय न्यासिनां भवनान्यहो।
विनिर्माय पितु र्नाम न्यस्य स्वस्था भवन्ति च।।९०।।

न दृष्टिं चालयन्त्यद्धा यत्र सन्ति सुदुःखिताः।
कार्यं तदेव कुर्वन्ति पितृभि र्यत् कृतं पुरा।।९१।।

तेषाममोघपापानां नराणां पुत्रहस्तयोः।
कन्यादानं भवेन् नूनं ग्राहवक्त्रे शशार्पणम्।।९२।।

अदत्ता सा भवेत् कन्या दरिद्रायाथवा पुनः।
दत्ता स्याद् न पुनस्तस्मै दुष्टपुत्राय दीयताम्।।९३।।

येषां संस्कारवान् पुत्रो दीनोपकृतिकारकः।
नित्यादिकर्मजातेषु लग्नो वा शीलरक्षकः।।९४।।
तेषामेव च पुत्राय दत्ता कन्या भवेदिह।
धर्मप्रजाप्रतानाय नान्येषान्तु कदाचन।।९५।।
ननु संस्कारहीनानां पुत्रेभ्यस्तादृशां नृणाम्।
कन्या चेद् दीयते सम्यक् तदा दोषो न विद्यते।।९६।।
ओमिति ब्रूमहे ब्रह्मन्! मा भूच् चिन्ताकुलो भवान्।
न्यायतो लभ्यते सर्वं यद् भवानाह निर्भरम्।।९७।।
नरास्तथाविधा अत्र कन्यानां पितरः सदा।
समानानेव सम्बन्धुं वाञ्छन्ति हतदैवताः।।९८।।
तथापि कृपया कश्चिद् धार्मिकस्ता यथाविधि।
अकिञ्चना विधायैव सत्पुत्रेभ्यः प्रयच्छतु।।९९।।
कन्यकानां स्वभावो हि स्वाश्रयं प्राप्य तिष्ठति।
दुष्टाश्रये भवेद् दुष्टः शिष्टे तु शिष्टतां व्रजेत्।।१००।।
'यादृग्गुणेन भर्त्रा स्त्रीः सम्बध्येत यथाविधि।
तादृग्गुणा भवेत् सा वै समुद्रेणेव निम्नगा'।।
आहैतत् स ऋषिश्रेष्ठो वशिष्ठोऽपि महामुनिः।
तस्मात् कन्या गुणोत्कर्षशालिने दीयतामिति।।१०१।।

प्रयोजनमत्र पूर्वाधिकरणोक्तमेव।

इति पातित्यपेटिकायामष्टादशमपेक्षितजनोपेक्षापूर्वक-
स्वकुटुम्बपरिपोषणमात्रदृष्टिपुत्राणामपि शिष्टैः
कन्याप्रदानेनाग्राह्यत्वाधिकरणम्।।१८।।

●

## अथैकोनविंशं वैष्णवेष्वारूढपतितानां सम्प्रदायव्यवस्थापनाधिकरणम्

वैष्णवसमाजे समागत्यापि विकर्मव्यासक्त आरूढपतित इत्युच्यते। वैष्णवशिष्टविगर्हितास्त्याज्या भवन्त्यारुढपतिता इति प्रागेवावोचाम। एतेषामवस्थानं क्वेति विचारयितुमवशिष्यते। किमेतेऽत्र धिक्कृताः पुनस्त्रयीविरुद्धं पाखण्डप्रधानमेव पन्थानं विशेयुरुत भवति कश्चिदपरः पन्था यत्रैते सप्रतिष्ठमासीरन्निति? किन्तावदत्र प्राप्तम्? त्रयीविरुद्धं पाखण्डप्रधानमेव पन्थानमेते विशेयुरिति। कुतः?

सन्मार्गान्तरशून्यता जगति चेद् भ्रष्टा इमे वैष्णवा<br>
भूमौ संस्थितिकाङ्क्षिणो हतधियः शिष्टैरहो न्यक्कृताः।<br>
बुद्धाद्यान्तरकल्पितेषु गहनध्वान्तेषु नेयुः कथम्?<br>
यत्रोद्भिन्नमनोरथाः करतले कुर्वन्त्यभीष्टानिव।।१।।

यन्मार्गेषु विगर्हितानि विकृतप्रायाणि कर्माण्यहो<br>
बौद्धाद्यैरिह निर्विवेकमनसा धर्मत्वबुद्ध्या सदा।<br>
सेव्यन्ते श्रुतिबद्धसाधुमतिभि र्दूरीकृता दुर्जना-<br>
स्तान् सर्वानुपयान्तु सम्यगिति वै प्राप्ते वयं ब्रूमहे।।२।।

### सिद्धान्तः

सर्वं तद् भवता प्रभाषितमिदं तथ्यं भवेद् भारते<br>
यद्यर्शोरुजि पूरुषे विकलतावत् स्यान् न सत्पद्धतिः।<br>
सन्त्येवात्र तथाविधा भगवतो भक्तिप्रधाना इव<br>
मार्गा यत्र समानसत्कृतिधरो भ्रष्टोऽपि विभ्राजते।।३।।

नूनं तत्र च भोजनादिकविधौ सद्वद् विवेकस्तथा
वार्ता शिष्टतया शरीरशुचिताविप्रुट् च नो दृश्यते।
मल्लापूपसमृद्धभोज्यमुदरे गच्छत्यहो प्रायशो
यत्राभाति पलाण्डुकन्दलशुनोद्दीप्तं कटु व्यञ्जनम्।।४।।

दृश्यन्ते खलु धूमपानरसिका दीर्घोग्रकूर्चप्रिया
रक्ताक्षाः कटुभाषिणोऽपि सदयास्तत्रैव दिग्वाससः।
एवम्भूतविधा अपीह किल ते विष्णोः सपर्याशयाः
सोल्लासं विहरन्ति भूमिपटले बिभ्रद्विभाषा इव।।५।।

तेषामान्तरतोषपोषणविधौ सत्सङ्गमञ्चा इह
रच्यन्ते किल यत्र मूढजनता आयान्ति मुष्टा इव।
तत्रैते प्रियभाषिणो भगवतश्चर्चामिषेण ध्रुवं
स्वीयोत्कर्षमुदाहरन्ति वितरद्धासावलेहा इव।।६।।

सन्तः प्राक् तदनु स्थिति र्भगवतो भूलोक आभासते
यस्माद् गेहविरागभावरसिकाः सन्तो वयं सादरम्।
सत्तां तस्य विभावयाम इह वै तस्माद् भवन्तः सदा
सेवन्तामतुलान् सतः सत इति व्याख्यान्ति तत्रैव ते।।७।।

एवन्तेऽतिपवित्रतामुपगतान् गार्हस्थ्यभाजो जनान्
पृष्ठस्थान् प्रविधाय ताश्चटुगिरः संश्रावयन्तो मुदा।
अत्युच्चै र्विहसन्ति हास्यकणिकास्तन्वन्ति शास्त्राण्यपि
स्वेच्छाचारपरम्परापरतया जल्पन्ति गायन्ति च।।८।।

तेषां भव्यनिकेतने खलधियः प्रायः कुतर्कोन्नताः
पुष्टाः पुष्टिविधायिभि र्बहुविधै र्भोज्यै र्भ्रमद्मस्तकाः।
दृश्यन्ते दयनीयदूनमनसः सत्साधवोऽपि क्वचिद्
यत्सम्यक्-प्रभयैव धूर्तनिचयः क्षम्यापराधो भवेत्।।९।।

श्रीमद्भक्तिविधादरा अपि च ते यद्यप्यहो तन्वते
नानालोककथापरातिरसिका वाचो जनानां प्रियाः।
इत्थं वा धनसंग्रहव्यसनिनः शिष्टप्रयुक्ताः शिवा
वार्ता वीक्ष्य समुद्विजन्ति कृपणाः सूर्यादुलूका इव।।१०।।

तानेतान् परितस्त एव धिषणाशून्या निरस्तादरा
राजन्ते खलु ये सदैव बहुधा चाटूक्तिसिद्धान्तराः।
एवं सत्यपि ते त्रयीशुभपथद्विड्व्राततः श्रेष्ठता-
सूचावेव समाविशन्ति भगवद्भक्तौ हि तेषां मनः।।११।।

अस्मद्भारतराष्ट्र एव विततान्यन्तर्मुदः सिद्धये
तीर्थान्याशु चरन्ति भीरुमतयस्तेष्वेव केचिन् नरः।
केचिद् निर्झरिणीतटैकगतयः शुष्कं तपः कुर्वते
तत्सर्वं च निभाल्य मूढमनुजै र्भूयो धनं दीयते।।१२।।

एतेषामधमे मते कपटताभाजोऽपि भुग्ना अपि
काषायाम्बरधारितागुणजुषः सन्तो भवन्त्यञ्जसा।
सन्तोऽपीह विपश्चितोऽपि न तथा गार्हस्थ्यदोषेण वै
भक्तास्तेऽपि भवन्ति ये धनमदप्रोत्तुङ्गगर्वानलाः।।१३।।

एतत्सज्जनमानसेषु करुणाविन्दु र्वराको भिया
नैवायाति यतो गभीरविषयेऽप्येते हसन्त्युद्धताः।
तस्मादेव च कारणात् प्रभुकथाव्यासान् विचिन्वन्ति तान्
ये हास्येषु भवन्ति पूर्णकुशला होलासु मत्ता इव।।१४।।

एवम्भूता महान्तो मरुदिव चपला यत्र घूर्णन्त्यपूर्णाः
शिष्टानाप्ताँश्च यत्र स्फुरदमितजटाः स्फीतधूर्ता हसन्ति।
यत्राहो दीर्घपङ्क्तौ व्यभिचरितगुणाः सर्वभक्षा भवन्ति
तस्मिन् वै सम्प्रदाये पुनरपि पतिताः स्वेच्छया ते विशन्तु।।१५।।

प्रयोजनमत्र पूर्वपक्षे त्रयीमार्गद्वेषिणां शाश्वतिकी सत्ता सिद्धान्ते तु सा नेति।

इति पातित्यपेटिकायामेकोनविंशं वैष्णवेष्वारुढपतितानां सम्प्रदायव्यवस्थापनाधिकरणम्।।१९।।

श्रीमत्प्राप्तप्रतिष्ठश्रुतनिचयजुषां पूज्यपादाम्बुजानां
सम्यक्सेवासु तुष्टः समयमयमहो धर्मवित्सिद्धमत्र।
मीमांसान्यायतत्त्वाकलनमुदमपि प्राप्य पातित्यपेटीं
कृत्वा विद्वत्सपर्याञ्चरति स कमलाकान्तनामत्रिपाठी।।

इतिश्रीमद्भार्गवगोत्रोत्पन्नश्रीशिवगोविन्दत्रिपाठिपौत्रश्रीउमाशङ्करत्रिपाठितनूजन्म-पण्डितप्रवरश्रीपट्टाभिरामशास्त्रिलब्धमीमांसाविद्याचार्यपण्डितकमलाकान्तत्रिपाठि-प्रणीता समाप्तेयं पातित्यपेटिका।।इति।।

## पातित्यपेटिका

# मंगलाचरण

हम उस आनन्दरूप ब्रह्म की उपासना करते हैं, जिसका विग्रह सत् और चित् के आकार वाला है और जो सारे जीवों का शेषी (स्वामी) है तथा अखण्ड और सहज भी है। यहाँ अखण्ड और सहज शब्दों को आनन्द से जोड़ने पर अखण्डानन्द और सहजानन्द का भी सन्निवेश हो जाता है। इस प्रकार परब्रह्मपरमात्मा के साथ-साथ दो अन्य महापुरुषों की स्तुति भी एक पद्य से कर दी गयी है।।१।।

प्रजापति से प्रारम्भ हुई तथा मीमांसाभाष्यकार श्रीशबरस्वामी के मध्य वाली उस गुरुपरम्परा को नमस्कार है जो हमारे आचार्य तक चली आ रही है।।२।।

जिस महापुरुष के विशुद्ध सदाचार से बुद्धादि के अनुगामियों के कुमार्ग लीन हो जाते हैं उस मीमांसावार्तिककार श्रीमत्कुमारिलभट्टपाद को नमस्कार है।।३।।

श्रीभूमानन्दतीर्थ जी महाराज के निर्मल चरणरज के प्रभाव से जिन्हे सिद्धिप्रकर्ष प्राप्त हुआ है और जो प्रत्यक् चैतन्यरूप ब्रह्मदृष्टि रूपी आरे से सम्पूर्ण मायिक प्रपञ्च को ध्वस्त कर दिये हैं तथा जो पूरी पृथ्वी को ही मर्यादा से परिपूर्ण करने के लिए आविर्भूत हैं वे कल्पवृक्ष की तरह अपरिमित गुणों वाले श्रीअच्युतान्दतीर्थजी महाराज हैं।।४।।

सर्वथा दोषों से शून्य वैदिक विधियों से प्रकट होने वाले अपूर्वकार्य से सम्बन्धित धर्मक्रियाओं के उन उन जागृत तीर्थों में सावधान मन से प्रयोगानुर्वतन से जो इस संसार में गतिमान् प्राणियों की भव्यता के लिए ही लोकोत्तर (अलौकिक) हो गये हैं वे श्रेष्ठ महापुरुष श्रीविश्वनाथावधूतजीमहाराज सहृदयों के हृदय में सुशोभित हो रहे हैं।।५।।

अपनी सारी विधाओं से हम लोगों को शास्त्रों का अनुमान कराने वाले, पशुपति भगवान् शिव की तरह लोक में दिव्य दृष्टि धारण करने वाले अपनी अतिशयोपेत तपःश्री से सच्चिदानन्दरूप से व्यवस्थित श्रीभवानीनन्दनयति जी महाराज पृथ्वी पर उत्कृष्ट महापुरुष हैं।।६।।

श्रीमद्रामानुजाचार्य कौशलेन्द्रप्रपन्नाचार्य जी महाराज भी विद्वानों के हृदय में विराजमान रहते हैं। ये श्रीविष्णु भगवान् के चरणकमलों में प्रेम और विलीनता गुणों से आच्छादित और पुष्ट प्रपत्ति (शरणागति) के द्वारा अपनी शत्रुभूत बाधाओं को ध्वस्त कर दिये हैं तथा नरक की ओर जाने वाले, अशिष्ट, दुष्ट, अरिष्टभूत और धर्म से ही उदासीन खलों को अपने अप्रतिम प्रभाव से इतस्ततः प्रक्षिप्त भी कर चुके है॥७॥

प्रसिद्ध गुणगणों के उत्कर्ष से सम्पन्न, विशेषरूप से सुशोभित पूर्वोक्त इन सारे महापुरुषों के प्रत्यक्चैतन्य से अनुप्राणित श्री से समुपेत निर्मल मानस में जो सम्यग् रूप से समा गये हैं तथा सद्विद्या को उद्भासित करने के कारण तीनों लोकों में जिनका नूतन 'श्रीविद्याभास्कर' यह उपनाम सुशोभित हो रहा है और जो अपनी अद्भुत काव्यक्रियाओं से सुकवियों को भी नीचे कर दिये हैं वे अनन्तश्रीविभूषितचरणकमलवाले त्रिदण्डिस्वामीजी के स्वच्छ प्रसादावली से समुद्भासित अपने ललित श्रीविग्रह से दिशाओं के अन्तरालों को विद्योतित करने वाले तथा चकासित हो रहा हो भाग्य जिनका, ऐसे हम लोगों को सफल करने के लिए ही भूमिभाग में अवभासित होने वाले जगद्गुरु श्रीमद्रामानुजाचार्य-श्रीवासुदेवाचार्यजीमहाराज हरि के चरणकमलों में ही प्रेम रखने वाले उल्लसित हो रहे हैं॥८-९॥

इन वन्दनीय महापुरुषों के कृपासिन्धु के विन्दु मात्र से लब्धमनोरथ लोक में आयी यह पातित्यपेटिका सुशोभित हो रही है॥१०॥

इसके बाद अपनी तपस्याओं से भारत की समृद्धि का सम्पादन करने वाले महापुरुषों और अपने गुरुओं की शुभ स्तुति करता हूँ॥११॥

जिनका विग्रह विद्या से अवदात (निर्मल) है और अद्भुत योगशक्ति से समुद्भूत सकल सिद्धियों ने जिनके चरणों की उपासना की है, ऐसे श्रीमद्हरिहरानन्दसरस्वती जी महाराज करपात्रस्वामीजी को नमस्कार करता हूँ जो सारे लोक को ही धर्मों की ओर उन्मुख करने के लिए अवतार ग्रहण किये हैं॥१२॥

जो पर्याप्त वैभव प्राप्त करके भी निर्द्वन्द्वतया पुनः उसे मल की तरह त्याग कर दिये थे। इस प्रकार जिन्होंने 'यतीन्द्र' पद को स्वयं में निबद्ध किया था ऐसे स्वामिकरपात्रचरणकमलों को नमस्कार है॥१३॥

ऐसे श्रीमत्स्वामी करपात्र जैसे गुरु के चरणकमलों के पराग से ही जिनके हृदय में सारे शास्त्रों के शुद्ध पदार्थव्रात स्फुरित हुए हैं वे अपने समुल्लासित,

उदार तथा महान् अनुभावों से उपलक्षित श्रीसीतारामकविराज जी काशी में सर्वोत्कर्ष को प्राप्त हों।।१४।।

गुर्जरप्रान्तान्तर्गत नडियादनामक स्थान में अखण्डज्योति का विधान करने वाली साधु महापुरुषों से सम्पन्न श्रीसन्तराम की परम्परा विभ्राजमान हो रही है।।१५।।

राष्ट्र के सम्वर्धन में जो निरन्तर ही प्रयासरत रहते हैं तथा श्रीयोगिराज सन्तराम जी महाराज के जो उन्नत (विशाल) मनोहर हास ही हैं और विद्वानों के मन में सन्तोषाधान के लिए जो आर्यभाषा (संस्कृतवाङ्मय) को धारण एवम् परिपोषित भी कर रहे हैं, ऐसे श्रीसन्तराममन्दिर के महान्त श्रीरामदासजी महाराज रामदास जैसे ही हैं। (यहाँ अनन्वय अलङ्कार से उनके अन्य उपमा का व्यवच्छेद किया गया है तथा समर्थगुरुरामदास से तुलना भी है। इस प्रकार अनन्वय और उपमा के सङ्कर का यह मनोहर उदाहरण भी होगा।।१६।।

इस काशी में जो दया से समृद्धमन के कारण ही अतिगहन, गम्भीर ग्रन्थों के चिन्तन में निमग्न रहते थे तथा हम विद्यार्थियों के प्रति जिनका हृदय विशाल था, ऐसे विस्तृत श्री से सम्पन्न श्रीमद्गुरु शशिधरमिश्र जी को मैं सादर नमस्कार करता हूँ।।१७।।

जो साहित्यशास्त्ररूपी निर्मल सागर को पार करने वाले हैं तथा वैसे ही जो इस संसार में पदशास्त्र व्याकरण के भी ज्ञाता हैं, ऐसे अध्यापनकार्य के रसिक और रसिक सहृदयों से सदा सेवित होने वाले पूज्यपाद श्रीवायुनन्दन गुरुजी को शिर से नमस्कार करता हूँ।।१८।।

न्यायशास्त्र में निष्णात जो छात्रों को विद्यादान करके ही आह्लादित रहते हैं ऐसे हमारे पूज्यपाद श्रीवशिष्ठत्रिपाठीजी यहाँ सर्वोत्कर्ष को प्राप्त हो रहे हैं।।१९।।

न्यायादिशास्त्रों एवम् सकल वेदान्त विद्या से जो अपने मनोरथों को प्राप्त किये हैं, ऐसे अपने गुरुवर्य श्रीवैद्यनाथझा मैथिल महोदय की मैं वन्दना करता हूँ।।२०।।

सारे वटुओं का परिपालन जो अपने पुत्रों के समान सादर करते थे, ऐसे श्रीराजवंशीद्विवेदी जी की मैं स्तुति करता हूँ।।२१।।

बाल्यकाल में तन्द्राविहीन होकर जिन्होंने मुझे कौमुदी पढ़ाया, ऐसे अपने पितामहश्री श्रीशिवगोविन्दत्रिपाठी को नमस्कार करता हूँ।।२२।।

मतिमान् जैमिनि ऋषि के समान ही जो विद्योतित रहते थे तथा शास्त्रों में जिनकी अबाध गति थी एवम् वृद्धावस्था में भी जो अध्यापनकार्य करते थे, ऐसे अपने गुरुश्रेष्ठ पूज्यपाद श्रीपट्टाभिरामशास्त्रीजी को मैं नमस्कार करता हूँ।।२३।।

अपना सर्वस्व अर्पित करके भी वेदादिशास्त्रों के लिए उद्यम करने वाले पण्डितप्रवर श्रीडाह्याभाई पञ्चोली जी यहाँ मेरे हृदय में विराजमान रहें॥२४॥

अपने सम्प्रदाय की उन्नतभूमिका में प्रयत्नशील यतीन्द्रवर्य जगद्गुरु श्रीमद्रामानन्दाचार्य स्वामिश्रीरामेश्वरानन्दाचार्य जी महाराज सर्वोत्कर्ष को प्राप्त हो रहे हैं॥२५॥

स्वामिश्री अखण्डानन्दसरस्वतीजी महाराज की चरणश्री की सम्यक् उपासना से परमाह्लादित होने वाले स्वामीश्री ओङ्कारानन्दसरस्वतीजी महाराज मेरे हृदय में सुशोभित रहें॥२६॥

इन सारे उदात्त पुरुषों ने मेरे प्रति जो कुछ भी किया है उन सभी को हृदय में स्थापित करके तथा तत्त्व का विचार करके लोक में आयी यह पेटिका विद्वानों के प्रमोद के लिए शुभदक्षिणा के समान हो॥२७॥

●

# अथ प्रथमं वर्णाश्रमधर्मव्यवस्थापनाधिकरणम्

निःश्रेयस की प्राप्ति के लिए उपदेशों का अतिक्रमण न करते हुए अलौकिक कान्ति से विभूषित आस्तिक महापुरुष निरन्तर भारतभूमि में ही दिखायी देते हैं। यद्यपि अन्य देशों में भी किसी न किसी रूप में धर्मपद व्यवहार में आता है तथापि अन्य देश की जनता धर्मानुष्ठान ही करती है, यह हम निश्चय से नहीं कह सकते क्योंकि उनके आचार का कोई मूल नहीं है। निर्मूल वस्तु अप्रामाणिक होती है। वहाँ भी धर्मबुद्धि से अनुष्ठीयमान आचार हैं ही तथापि उन आचारों को धर्म के तत्त्वों के जानकार धर्म के रूप में स्वीकार नहीं करते। शास्त्रमूलक जो वास्तविक सनातन धर्म है वह तो आज कुछ लोगों की दृष्टि में घुसे हुए कङ्कण के समान हो गया है। जो पामरजन अपने तुच्छ स्वार्थ को परिपुष्ट करने में मात्र लगे हैं उनका वेदबोधित कल्याण के साधन कर्मों में द्वेष ही दिखायी देता है। उन्हीं दुष्टों की कुत्सित दृष्टि से धर्म सामाजिक सौहार्द में काँटे की तरह हो गया है। जो धर्म ही नहीं है वह गुणों की खान होकर उनके हृदयकमल में विराजमान है। इस प्रकार की आधुनिकी विचार धारा को देखते हुए ही इस विचार को प्रस्तुत किया जा रहा है।

क्या वेदमात्र से जिसका परिज्ञान होता है, ऐसे वर्णाश्रमयोग्य धर्म से लोक की उन्नति का विध्वंस होता है या सुखसमृद्धि का विस्तार होता है? इसके लिए यह भी विचारणीय है कि धर्म के मूल वेद के पूर्णरूप से विनाश के लिए तथा वैसे धर्म के व्यवस्थापक वर्ण विभाग के ध्वंस के लिए प्रयास करना चाहिये अथवा उसके संरक्षण के लिए जीवन को भी अर्पित कर देना चाहिये। इस प्रकार का सन्देह ही कैसे उपस्थित हो गया? ऐसी अपेक्षा होने पर यह कहना ही उचित है—

दोनों प्रकार की प्रवृत्तियों के दिखायी देने से सन्देह का सामने स्फुरित होना स्वाभाविक है। दिखायी ही देते हैं कुछ वेद के विदूषक, वेद से बोधित सकल पदार्थों के स्वाभाविक शत्रु, गन्दे नाले के समीप बस्ती के मार्ग में घूमने वाले सूअरों के समान भारत के ही अङ्क में वर्तमान अन्न, जल, पवन से परिपुष्ट कुछ जन। कोई स्वभाव से ही मधुर व्यवहार वाले भगवान् में रति से सम्पन्न गुरुओं की श्रेणी की उपासना जिन्होंने कर ली है, शोभन-भव्य-मति से अलंकृत, सुन्दरी के विकसित दोनों स्तनों से प्रतिष्ठा को प्राप्त हुए वक्षःस्थल में विराजमान मौक्तिक माला के

समान वसुन्धरा के वक्षःस्थल में अमूल्य भूषणरूप प्राप्त होते ही हैं। इस प्रकार परस्पर विरुद्ध मार्ग को स्वीकार करने वाले जनों का अपने मत के पोषण और दूसरे के मत के निराकरण में अत्यधिक प्रयास भारत में देखा ही जाता है। अतः तात्त्विक दृष्टि के लिए विचार आवश्यक है। यहाँ पर यह पूर्वपक्ष है.....

वेद और वर्णाश्रमाचार का ध्वंस ही कर देना चाहिये। क्यों? दलितों के त्रास का मूल होने से, प्रायः पारस्परिक द्वेष का हेतु होने से, विभेद-दृष्टि की प्रधानता के कारण, लोक की परिसमाप्ति प्रसक्त हो जाने से, राष्ट्र की एकता और अखण्डता के भङ्ग हो जाने के कारण तथा राष्ट्र की समृद्धि को बाधित करने से।

वेदबोधित मार्ग से विना वर्णविभाग को स्वीकार किए एक पद भी जाना सम्भव नहीं। वर्णविभाग जब तक भारत में रहेगा तब तक संभ्रान्त एवम् समुन्नत वर्ण में उत्पन्न व्यक्तियों की विलक्षण ही मनोदशा रहेगी। अपने उत्कर्ष में ही लगे रहने वाले वे दलितवर्ग के प्रति शुभ दृष्टि नहीं रखते। दलितवर्ग के उत्कर्ष के विघात में ही वे लगे रहते हैं। इस प्रकार इस भारत में अत्यधिक संख्या में वर्तमान दलितों का त्रास सहज ही प्रतिष्ठित हो रहा है। इन सबका मूल वर्णाश्रमधर्मव्यवस्था ही है। वर्णाश्रमधर्मव्यवस्था के मूल में वेद ही है जैसे कौरवों के मूल में धृतराष्ट्र। सवर्णों का दलित जनता के प्रति अत्यधिक अत्याचार वर्णाश्रमधर्मव्यवस्था का ही प्रसाद है। इसी बात को अम्बेडकर कहते ही हैं—

मन्दिर प्रवेश की वैदिक धर्म को मानने वाले अस्पृश्यों को अनुमति नहीं देते। अस्पृश्यों का मन्दिर के निर्माण में तथा वहाँ भगवान् की मूर्ति की स्थापना में अधिकार नहीं है, ऐसा वैदिक बोलते हैं। आगरा में कोई चमार किसी ब्राह्मण को अपने घर में भगवान् नारायण की पूजा करते हुए देखकर अपने घर में वैसा ही करने लगा। जब ब्राह्मण को मालूम हुआ कि चमार अपने घर में भगवान् की पूजा कर रहा है तो क्रोध से आग बबूला होकर ग्राम्य पुरुषों को लेकर उस चमार के पास गया और उसे पशु के समान मारा और बोला—'विष्णु की पूजा करने की तेरी हिम्मत कैसे हुई? बाद में उसके मुँह में कीचड़ पोतकर ही उसे छोड़ा गया। हताश बेचारा वह चमार वैदिक मार्ग को छोड़कर मूसलमानों के मार्ग को स्वीकार कर लिया।''

इस प्रकार दलितों के त्रास का मूल होने से सनातन धर्म से लोक की उन्नति का विघात ही परिलक्षित होता है। अत एव उसे जड़ से उखाड़ फेकने का ही प्रयास करना चाहिये।

(देखिए—डॉ. अम्बेडकर सम्पूर्णवाङ्मय खण्ड ९, पृ. ६६)

यही एक भारतीय शासकों का भी कर्तव्य होना चाहिये।

अपनी-अपनी उन्नति के लिए स्पर्धा प्राणिमात्र का स्वभाव है। कोई भी सचेता मानव किसी को पीड़ित न करता हुआ किसी भी मार्ग से यदि अपनी उन्नति चाहता है तब वह संसार का क्या अनिष्ट करता है? यदि ब्राह्मण अग्निहोत्रादि धर्म के अनुष्ठान से अथवा भगवान् की पूजा से लोकोत्तर सुख की इच्छा करता है तो उसी सुख की कामना से यदि कोई शूद्र ब्राह्मण जैसा ही आचरण करता है तो वह बेचारा कैसे तिरस्करणीय हो सकता है? यदि सारे मनुष्यों की आकृति एक है भोजनशयनादि व्यापार एक है तो उनके आचारों की भिन्न प्रणाली धर्मनिरपेक्ष शक्तियों को कम्पित करती ही है। यह वेद निश्चय से ही लोक में विद्वेष पैदा करने वाला है जो अपने द्वारा ही बोधित धर्मों में नियोजन के लिए पुरुषों की जाति की अपेक्षा करता है। सारे अनर्थों की जड़ यह जातिपरम्परा वेदों के बिना सत्ता में नहीं आयी। जातिविशेष को ही लेकर वेदों की प्रवृत्ति होती है। वेद के लिए और वेदबोधित धर्म के अनुष्ठान के लिए मनुष्य, विशेषतः सवर्ण जाति को वैसे ही परिपुष्ट करते हैं जैसे प्रजातन्त्र में घूस। ये लोग वर्णसाङ्कर्य से वैसे ही डरते हैं जैसे चाण्डालस्पर्श से। जिनकी वृत्ति संकुचित है, ऐसे पशुवत् जीवन व्यतीत करने वाले दीन हीन मानवों को अपने से दूर रखते हैं और उन्हें अशुभ मानते हैं। एक ही मानवजाति में इतना बड़ा विभेद का पहाड़ पारस्परिक विद्वेष को बढ़ाने में वैसे ही समर्थ है जैसे आग में संस्कृत घी की आहुति ज्वाला को बढ़ाने में समर्थ होती है। इस प्रकार वर्णाश्रमधर्म और उसका मूल वेद जब तक अत्यन्त विनष्ट नहीं होता तब तक समतामूलक समाज की संरचना सम्भव नहीं। वेद और तन्मूल वर्णाश्रमधर्म के विद्यमान रहने पर प्रलयपर्यन्त पारस्परिक विद्वेषरूपी दावानल को शान्त नहीं किया जा सकता। धर्मनिरपेक्षतावादी बुद्धिजीवी महापुरुष लोक के विनाश को देखते ही हैं। कैसे? वेद में भेददर्शन की प्रधानता होने से। अहो, यह वेद हर तरह से योग्यताशक्ति से सम्पन्न ब्राह्मण को ही मानता है। क्योंकि वह याजन-अध्यापन-प्रतिग्रह में ब्राह्मणों को ही नियुक्त करता हुआ दिखायी देता है। यद्यपि स्वाध्याय (वेद की अपनी शाखा) के अध्ययनक्रम से क्षत्रिय और वैश्यों को भी अग्निहोत्रादि धर्मों में नियुक्त करता है तथापि वह महानुभाव वेद याजनादि कर्मों में उन दोनों को अयोग्य ही समझता है। ज्योतिष्टोम को ही पहले आप देखें। देवताओं और ब्राह्मणों के लिए सोमरस-पान की व्यवस्था है। क्षत्रिय तो विचारा बटोह के रस से ही सन्तोष कर लेता है। वह सोमरस का अधिकारी नहीं। क्षत्रिय और वैश्य भी जब धर्मसम्बन्धी विद्या से सम्पन्न हैं तथा विद्या ही

अध्यापन और याजन में निमित्त है तो उन दोनों को अपने अधिकार से बाहर कर दे, यह कहाँ का न्याय है? परस्पर की सहायता करने से यद्यपि त्रैवर्णिक एकजुट् होते हैं तथापि शूद्र और अन्त्यजों की दुर्दशा कोई भी उदारचित्तवाला व्यक्ति कैसे देख सकता है। वे विचारे पशुओं से भी हीन गिने जाते हैं। उनके समीप सवर्ण रहना-सोना-खाना-पीना भी पसन्द नहीं करते। उनके जलाशय से जल निकालने पर वे दण्डित होते हैं। इसीलिए वे समतामूलक बौद्धधर्म, मोहम्मदधर्म, इसाईधर्म स्वीकार कर लेते हैं तथा लोकविनाशक वैदिक धर्म का त्याग कर देते हैं। कर्म के अनुसार ही वर्णव्यवस्था है।

यदि शूद्र भी ब्राह्मण की तरह संस्कारसम्पन्न होकर स्वाध्याय का अध्ययन करता है और धर्म का अनुष्ठान करता है तो वह ब्राह्मण के रूप में ही स्वीकार्य होना चाहिये। ब्राह्मण भी यदि हीन कर्म करे तब वह शूद्र ही माना जाय। वस्तुतस्तु प्रत्यक्ष न होने के कारण भी ब्राह्मणत्वादि वर्णों का विभाग नहीं है। इस प्रकार वर्णविभाग ही जब सिद्ध नहीं हुआ तो उनके लिए धर्मों का आम्नान करने वाले वेद और तन्मूलक सारे ग्रन्थों का नाश ही कर देना चाहिये। डा. अम्बेडकर भी ऐसा ही कुछ चीत्कार करते हैं—वेदादि सकल हिन्दू-ग्रन्थों में डायनामाइट लगाकर नष्ट कर देना चाहिये।

राष्ट्र की एकता और अखण्डता, जो प्रजातन्त्र की प्राणभूता है, वह बेचारी कैसे स्थिर रह सकती है जब तक वेद और वर्णविभाग को जीवित रहने के लिए जूस मिलता रहेगा। सर्वथा राष्ट्र की एकता-अखण्डता का भङ्ग ही हो जायेगा। एकतामूलक ही राष्ट्र की समृद्धि है, ऐसा नीतिशास्त्र के पण्डित कहते हैं। एकता का भङ्ग वेद ही करता है, इस प्रकार निश्चय ही वेद विषवृक्ष ही है। अतः वेद और उससे उदीयमान वर्णाश्रमाचारों का ध्वंस ही कर देना चाहिये। ऐसा पूर्वपक्ष प्राप्त होने पर यह सिद्धान्त प्रस्तुत किया जा रहा है—

## सिद्धान्त

इन सारे दोषों की प्रसक्ति हो सकती है यदि वेद दोषों से युक्त होता। ऐसी स्थिति उन्हीं ग्रन्थों में सम्भव है जो मात्सर्यरूपी ग्राह से ग्रस्त हैं। हमारा वेद तो अपौरुषेय होने से सर्वथा दोषशून्य है। धर्म-अधर्म की व्यवस्था भी वेद से ही सम्भव है। वेदों के बिना धर्म-अधर्म की चर्चा भी करना बेकार है। शाक्य (बौद्ध) आदि दुर्मार्ग के प्रवर्तक जो दुष्ट बुद्धि पुरुष हैं, वे धर्म के मूल कैसे हो सकते हैं? क्योंकि वे क्षुद्र स्वार्थ से युक्त होने के कारण अव्यवस्था पैदा करने वाले हैं। जो सत्यादि साधारण धर्म हैं उनमें भगवान् वेद सारे मनुष्यों को ही नियुक्त करता है

जिससे वे कल्याण प्राप्त कर सकें। जो धर्म ब्राह्मणादि तत्तद्वर्णों के लिए उपदिष्ट हैं उनमें नरकप्राप्ति के लिए अन्य पुरुष कैसे नियुक्त होगा?

धर्मक्रिया के अनुष्ठान में वैदिकलिङ् जिसे विधि कहते हैं, ऐसा शब्द ही यदि विद्वान्, शिष्ट, ब्राह्मणादि तीनों वर्णों को नियुक्त कर रहा हो तो धर्म की व्याख्या करने वाले महर्षि उस विषय में क्या कर सकते हैं। ब्राह्मणत्वादि जाति प्रत्यक्ष है ऐसा श्रीमत्कुमारिलभट्टपाद ने तन्त्रवार्तिक में प्रयत्नपूर्वक सिद्ध किया है, अतः वर्णसाङ्कर्य किसी भी प्रकार से स्वीकार्य नहीं है। यदि जातिप्रथा के विनाश के लिए व्यभिचार से उत्पन्न होने वाले वर्णसाङ्कर्य को आप स्वीकार करते हैं तो निश्चय ही आप अपने क्षुद्र स्वार्थ के लिए अपनी नीचता ही प्रकट कर रहे हैं क्योंकि कोई भी साधु पुरुष ऐसा आचरण नहीं कर सकता। असाधु पुरुष ही ऐसा कुकर्म करता है। यदि आप सनातनधर्मविदूषक वेदमात्र से अवगत होने वाले धर्म के आचरण और अधर्म के त्याग से लोक का विनाश होगा, ऐसा कहते हैं तो निश्चय ही आप खल, स्तब्ध और शठ हैं। आप को वेदों में बहुत बड़ा दोष दिखायी देता है तथा शाक्य-दिगम्बर-मोहम्मदादि के कुत्सित ग्रन्थों में महान् गुण दिखायी देता है, इसमें क्या कारण हो सकता है, यही नितान्त विचारणीय है। क्षुद्र सत्तासुख के आस्वाद में मग्न नेता की नीचताग्रन्थि से प्रेरित, वर्णों में विद्वेष बढ़ाना ही इसका बहुत बड़ा कारण है। ऐसा करने से स्वाभाविक जो वेद के विद्वेषी हैं उनके मन को सन्तोष मिलेगा। हाय, इससे बड़ा कष्ट इस आर्यों के ही देश में क्या हो सकता है कि अल्पसंख्यकतावादी वेदों के विनाश के लिए चेष्टा करता है तथा शाक्यादिवेदविरोधियों के ग्रन्थों में अनन्त दोष होते हुए भी वह धूर्त मौन स्वीकार कर लेता है। शाक्यादिकों के ग्रन्थों की आलोचना करने का साहस ही उसमें नहीं हैं। आज वेदानुमोदित शिष्टस्मृति से उपदिष्ट राजधर्म का तिरस्कार करके कुत्सित मार्गों का अनुसरण करने वाले लोलुप जन ही वेदवर्णाश्रमाचार के दूषण में लगे हुए हैं। इसमें जो कारण पहले कहा गया उससे कोई दूसरा कारण दिखायी नहीं देता।

जो यह पूर्वपक्षी ने कहा कि वर्णाश्रमगत वेदोपदिष्ट धर्मों से दलितों का अत्यधिक त्रास होता है, इस पर मैं यह कहूँगा—

राजा प्रजा से कर लेता है तथा अपराधियों से भी दण्ड के रूप में उसे कुछ प्राप्त होता है। किसलिए? सर्वतोभावेन प्रजा की रक्षा के लिए। बलिष्ठ के द्वारा यदि हीन का त्रास हो रहा है तो राजा का ही कर्तव्य है कि वह उसे रोके। प्रजा को निन्दित कार्य करने को प्रेरित कौन करता है? इसका एकमात्र उत्तर यही

